इति सारार्थवर्षिण्यां हर्षिण्यां भक्तचेतसाम्।
गीतासु द्वादशोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ (४)

गी०भू०—उक्तभक्तियोगमुपसंहरन् तन्निष्ठा-फलमाह-ये त्विति। ये भक्ता यथोक्तं 'मय्यावेश्य मनो ये माम्' इत्यादिभिर्यथागतमिदं धर्म्मामृतं पर्य्युपासते-प्राप्यं मामिव प्रापकं तत् समाश्रयन्ति, श्रद्दधाना भक्तिश्रद्धालवो मत्परमा मन्निरतास्ते ममातीव प्रिया भवन्ति ॥२०॥

वशः स्वैकजुषां कृष्णः स्वभक्त्येकजुषां तु सः।
प्रीत्यैवातिवशः श्रीमानिति द्वादशनिर्णयः ॥

इति श्रीमद्भगवद्गीतोपनिषद्भाष्ये द्वादशोऽध्यायः।

# त्रयोदशोऽध्यायः

अर्जुन उवाच—

प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव च।
एतद्वेदितुमिच्छामि ज्ञानं ज्ञेयं च केशव ॥

श्रीभगवानुवाच—

इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञमिति तद्विदः ॥१॥

सारा०व०—नमोऽस्तु भगवद्भक्त्यै कृपया स्वांशलेशतः।
ज्ञानादिष्वपि तिष्ठेरात् सार्थकीकरणा यया ॥(१)
षट्के तृतीयेऽत्र भक्तिमिश्रं ज्ञानं निरूप्यते।
तन्मध्ये केवला भक्तिरपि भङ्ग्या प्रकृष्यते ॥(२)



त्रयोदशे शरीरञ्च जीवात्म--परमात्मनोः।
ज्ञानस्य साधनं जीवः प्रकृतिश्च विविच्यते ॥(३)

तदेवं द्वितीयेन षट्केन केवलया भक्त्या भगवत्प्राप्तिः; ततोऽन्या अहंग्रहोपासनाद्यास्तिस्र उपासनाश्चोक्ताः। अथ प्रथमषट्कोदितानां निष्कामकर्म्मयोगिनां भक्तिमिश्रज्ञानादेव मोक्षस्तच्च ज्ञानं संक्षेपादुक्तमपि पुनः क्षेत्र-क्षेत्रज्ञादि-विवेचनेन विवरितुं तृतीयं षट्कमारभते ॥ १ ॥

गी०भू०—कथिताः पूर्व्वषट्काभ्यामर्थाज्जीवादयोऽत्र ये।
स्वरूपाणि विशोध्यन्ते तेषां षट्केऽन्तिमे स्फुटम् ॥
भक्तौ पूर्व्वोपदिष्टायां ज्ञानं द्वारं भवत्यतः।
देहजीवेशविज्ञानं तद्वक्तव्यं त्रयोदशे ॥

गी०भू०—आद्यषट्के निष्कामकर्म्मसाध्यं जीवात्मज्ञानं परमात्मज्ञानोपयोगितया दर्शितम्, मध्यषट्के तु 'भक्ति शब्दितं परमात्मोपासनं तन्महिमनिगदपूर्व्वकं उपदिष्टम्, तच्च केवलं तद्वश्यताकरं स्वात्मप्रापकम्। आर्त्तादीनां तु तमुपासीनानामार्त्तिविनाशादिकरं तदेकान्तिप्रसङ्गेन केवलं स्वात्मप्रापकञ्च। योगेन ज्ञानेन चोपसृष्टं स्वैश्वर्य्यप्रधानतद्रूपोपलम्भकं मोचकं चेत्युक्तम्। तथास्मिन्नन्त्यषट्के प्रकृतिपुरुषतत्संयोगहेतुक-जगत्तादीश्वरस्वरूपाणि कर्म्मज्ञान-भक्ति स्वरूपाणि च विविच्यन्ते। ज्ञानवैशद्याय एतावत्त्रयोदशेऽस्मिन्नध्याये देह-जीव-परेश-स्वरूपाणि विवेचनीयानि, देहादिविविक्तस्यापि जीवात्मनो देहसम्बन्धहेतुस्तद्विवेकानुसन्धिप्रकारश्च विमर्शनीयः। तदिदमर्थजातमभिधातुं भगवानुवाच-इदमिति। हे कौन्तेय! इदं सेन्द्रियप्राणं शरीरं भोक्तुर्जीवस्य भोग्यसुखदुःखादि-प्ररोहकत्वात् क्षेत्रमित्यभिधीयते तत्त्वज्ञैः। एतच्छरीरं देवोऽहं मानवोऽहं स्थूलोऽहमित्यज्ञैरात्मभेदेन प्रतीयमानमपि यः शय्यासनादिवदात्मनो भिन्नमात्मभोगमोक्षसाधनञ्च वेत्ति, तं वेद्याच्छरीरात्तद्वेदितृतया भिन्नं

तद्विदः क्षेत्रक्षेत्रज्ञस्वरूपज्ञाः क्षेत्रज्ञमिति प्राहुः। भोगमोक्षसाधनत्वं शरीरस्योक्तं श्रीभागवते-"अदन्ति चैकं फलमस्य गृध्रा ग्रामेचरा एकमरण्यबासाः। हंसा य एकं बहुरूपमिज्यैर्मायामयं वेद स वेद वेदम्" इति। शरीरात्मवादी तु क्षेत्रज्ञो न, क्षेत्रत्वेन तज्ज्ञानाभावात्॥१॥

क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम॥२॥

सारा०ब०—तत्र किं क्षेत्रं कः क्षेत्रज्ञ इत्यपेक्षायामाह--इदमिति। इदं सेन्द्रियं योगायतनं शरीरं क्षेत्रम्, संसारवृक्षस्य प्ररोहभूमित्वात्। तद्यो वेत्ति बन्धदशायामहं ममेत्यभिमन्यमानं स्वसम्बन्धित्वेनैव जानाति, मोक्षदशायान्त्वहं-ममेत्यभिमानरहितः स्वसम्बन्धरहितमेव यो जानाति, तमुभयावस्थं जीवं क्षेत्रज्ञमिति प्राहुः,-कृषीबलवत् स एव क्षेत्रज्ञस्तत्फलभोक्ता च यदुक्तं भगवता-"अदन्ति चैकं फलमस्य गृध्रा ग्रामेचरा एकमरण्यबासाः। हंसा य एकं बहुरूपमिज्यैर्मायामयं वेद स वेद वेदम्॥" अस्यार्थः-गृध्यन्तीति गृध्रा ग्रामेचरा बद्धजीवा अस्य वृक्षस्यैकं फलं दुःखमदन्ति परिणामतः स्वर्गादेरपि दुःखरूपत्वात्, अरण्यबासा हंसा मुक्तजीवा एकफलं सुखमदन्ति, सर्व्वथा सुखरूपस्यापवर्गस्याप्येतज्जन्यत्वात्। एवमेकमपि संसारवृक्षं बहुविधनरकस्वर्गापवर्गप्रापकत्वाद्बहुरूपम्, मायाशक्तिसमुद्भूतत्वान्मायामयम्। इज्यैः पूज्यैर्गुरुभिः कृत्वा यो वेदेति तद्विदः क्षेत्रक्षेत्रज्ञयोर्वेदितारः॥२॥

गी०भू०—क्षेत्रज्ञानाज्जीवात्मनः क्षेत्रज्ञत्वमुक्तम्। अथ परमात्मनस्तदाह-क्षेत्रज्ञञ्चापि मामिति। हे भारत! सर्व्वक्षेत्रेषु माञ्च क्षेत्रज्ञं विद्धि, अपिस्त्ववधारणे। जीवाः स्वं स्वं क्षेत्रं स्वभो-



गमोक्षसाधनं जानन्तः क्षेत्रज्ञाः प्रजावत्, अहन्तु सर्व्वेश्वर एक एव सर्व्वाणि तानि नियम्यानि भर्त्तव्यानि च जानन् तत्सर्व्वक्षेत्रज्ञो राजवदित्यर्थः। सर्व्वेश्वरस्यापि क्षेत्रेश्वरस्यापि क्षेत्रज्ञत्वं-"क्षेत्राणि हि शरीराणि बीजं चापि शुभाशुभे। तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते॥" इत्यादिस्मृतिभ्यः। किं ज्ञानमित्यपेक्षायामाह-क्षेत्रेति। क्षेत्रेण सहितौ क्षेत्रज्ञौ जीवपरौ क्षेत्रक्षेत्रज्ञौ, तत्सहितयोस्तयोर्मिथो विवेकेन यज्ज्ञानं तदेव ज्ञानं मम मतम्, ततोऽन्यथा त्वज्ञानमित्यर्थः। इदमत्र बोध्यम्-प्रकृतिजीवेश्वराणां भोग्यत्व-भोक्तृत्व-नियन्तृत्व-धर्म्मकत्वान्मिथः-संपृक्तानामपि तेषां न तत्तद्धर्म्मसाङ्कर्य्यं चित्राम्बररूपवदित्येवमाह सूत्रकारः-"न तु दृष्टान्तभावात्" इति श्रुतयश्च प्रकृत्यादीनां विविक्तधर्म्मकतामाहु-"पृथगात्मानं प्रेरितारञ्च मत्वा जुष्टस्ततस्तेनामृतत्वमेति", "ज्ञाज्ञौ द्वावजावीशानीशावजा ह्येका भोक्तृभोगार्थयुक्ता", "क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः", "भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्व्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्", "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः॥" "प्रधानक्षेत्रज्ञपतिर्गुणेशः" इत्यादयः। अत्रापि 'क्षराक्षर' शब्दबोध्यात क्षेत्रक्षेत्रज्ञरूपाद्युगलात् स्वस्य पुरुषोत्तमस्यान्यत्वं वक्ष्यति-'द्वाविमौ पुरुषौ' इत्यादिभिस्तस्मान्मिथः संपृक्तानामपि प्रकृत्यादीनां विविक्ततया ज्ञानं तात्त्विकमिति। यत्त्वेकात्मवादिनः 'क्षेत्रज्ञञ्चापि मां विद्धि' इत्यत्र सामानाधिकरण्यप्रतीत्या सर्व्वेश्वरस्यैव सतोऽस्या विद्ययैव क्षेत्रज्ञभावो रज्जोरिव भुजङ्गमत्वम्, तन्निवृत्तये हरेराप्ततमस्येदं वाक्यं 'क्षेत्रज्ञञ्चापि माम्' इति-'रज्जुरियं न भुजङ्गः' इत्याप्तवाक्याद्भुजङ्गत्वभ्रान्तिरिव क्षेत्रज्ञत्वभ्रान्तिरस्माद्वाक्याद्विनश्यतीत्याहुस्तत्

किलोपदेश्यासम्भवादेव निरस्तमिति 'देहिनोऽस्मिन्' इत्यस्य भाष्ये द्रष्टव्यम्। एवं तु व्याख्यानं युज्यते । च-शब्दः क्षेत्रसमुच्चयार्थः, क्षेत्रं क्षेत्रज्ञञ्च मामेव विद्धि-मदधीनस्थितिप्रवृत्तिकत्वान्मद्व्याप्यत्वाच्च मदात्मकं जानीहीति । एवमेवोक्तं-क्षेत्रक्षेत्रज्ञयोरिति । तयोर्मदधीनप्रवृत्तिकत्वादिभिर्मदात्मकतया यज्ज्ञानं, तज्ज्ञानं मम मतमितोऽन्यथा त्वमतमिति ॥२॥

तत्क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत् ।
स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥३॥

सारा०ब०—एवं क्षेत्रज्ञानाज्जीवात्मनः क्षेत्रज्ञत्वमुक्तम् , परमात्मनस्तु ततोऽपि कार्त्स्न्येन सर्व्वक्षेत्रज्ञत्वात् क्षेत्रज्ञत्वमाह–क्षेत्रज्ञमिति । सर्व्वक्षेत्रेषु नियन्तृत्वेन स्थितं मां परमात्मानं क्षेत्रज्ञं विद्धि । जीवानां प्रत्येकमेकैकक्षेत्रज्ञानां तदपि न कृत्स्नम् । मम त्वेकस्यैव सर्व्वक्षेत्रज्ञत्वं कृत्स्नमेवेति विशेषो ज्ञेयः । किं ज्ञानमित्यपेक्षायामाह–क्षेत्रेण सह क्षेत्रज्ञयोर्जीवात्मपरमात्मनोर्यज्ज्ञानं क्षेत्रजीवात्मपरमात्मनां यज्ज्ञानमित्यर्थः । तदेव ज्ञानं मम मतं सम्मतं च । तत्र "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः" इत्युत्तरग्रन्थविरोधाद्व्याख्यान्तरेणैकात्मवादपक्षो नानुकर्त्तव्यः ॥ ३ ॥

गी०भू०—संक्षेपेणोक्तमर्थं विशदयितुमाह–तदिति । तत् क्षेत्रं शरीरं–यच्च यद्द्रव्यं, यादृक् यदाश्रयभूतं, यद्विकारि यैर्विकारैरुपेतं,यतश्च हेतोरुद्भूतं यत् प्रयोजनकञ्च, यदिति यत् स्वरूपम् , स च क्षेत्रज्ञो जीवलक्षणः परेशलक्षणश्च–यो यत्स्वरूपो यत्प्रभावो यच्छक्तिकश्च, तत्समासेन मे मत्तः शृणु । तदिति क्लीवशेषत्वमेकवद्भावश्च–"नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्" इति सूत्रात् ॥३॥



ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥४॥

सारा०ब०—संक्षेपेणोक्तमर्थं विवरितुमारभते–तत् क्षेत्रं शरीरं यच्च महाभूतप्राणेन्द्रियादि-संघातरूपम् , यादृक् यादृशेच्छादिधर्म्मकम् , यद्विकारि वैरिप्रियादिविकारैर्युक्तम् , यतश्च प्रकृतिपुरुषसंयोगादुद्भूतम् , यदिति यैः स्थावरजङ्गमादिभेदैर्भिन्नमित्यर्थः । स क्षेत्रज्ञो जीवात्मा परमात्मा च । यत् तदिति नपुंसकमनपुंसकेनैकवच्चेति 'एकशेषः' । समासेन संक्षेपेण ॥४॥

गी०भू०—इदं क्षेत्रक्षेत्रज्ञयाथात्म्यं कैर्विस्तरेणोक्तं यत् समासेन ब्रूष इत्यपेक्षायामाह–ऋषिभिरिति । ऋषिभिः पराशरादिभिरेतत् क्षेत्रादिस्वरूपं बहुधा गीतम्–"अहं त्वञ्च तथान्ये च भूतैरुह्याम पार्थिव । गुणप्रवाहपतितो भूतवर्गोऽपि यात्ययम् ॥ कर्म्मवश्या गुणा ह्येते सत्त्वाद्याः पृथिवीपते । अविद्या-सञ्चितं कर्म्म तच्चाशेषेषु जन्तुषु ॥ आत्मा शुद्धोऽक्षरः शान्तो निर्गुणः प्रकृतेः परः ॥" इत्यादिभिः, तथा छन्दोभिर्वेदैर्विविधैः सर्व्वैर्बहुधा तद्गीतं यजुःशाखायां–"तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इत्यादिना "ब्रह्म पुच्छं प्रतिष्ठा" इत्यन्तेनान्नमय-प्राणमय-मनोमय-विज्ञानमयानन्दमयाः पञ्च पुरुषाः पठितास्तेष्वन्नमयादित्रयं जडं क्षेत्रस्वरूपं, ततो भिन्नो विज्ञानमयो जीवस्तस्य भोक्तेति जीवक्षेत्रज्ञस्वरूपं, तस्माच्च भिन्नः सर्व्वान्तर आनन्दमय इतीश्वरक्षेत्रज्ञस्वरूपमुक्तम् । एवं वेदान्तरेषु मृग्यम् । ब्रह्मसूत्ररूपैः पदैर्वाक्यैश्च तद्याथात्म्यं गीतम्–तेषु "न वियदश्रुतेः" इत्यादिना क्षेत्रस्वरूपं, "नात्मा श्रुतेः" इत्यादिना जीवस्वरूपं, "परात्तु तच्छ्रुतेः" इत्यादिनेश्वरस्वरूपम् । स्फुटमन्यत् ॥४॥

महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥५॥
इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ।
एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥६॥
अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥७॥
इन्द्रियार्थेषु वैराग्यमनहंकार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥८॥
असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥९॥
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥१०॥
अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥११॥
ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते ।
अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥१२॥

सारा०ब०—कैर्विस्तरेणोक्तस्यायं संक्षेप इत्यपेक्षायामाह—ऋषिभिर्वशिष्ठादिभिर्योगशास्त्रेषु, छन्दोभिर्वेदैश्च, ब्रह्मसूत्राणि—"अथातो ब्रह्मजिज्ञासा" इत्यादीनि तान्येव सूत्राणि, ब्रह्म पद्यते ज्ञायते एभिरिति तानि । तथा तैः कीदृशैर्हेतुमद्भिः "ईक्षतेर्नाशब्दम्", "आनन्दमयोऽभ्यासात्" इति युक्तिमद्भिर्विनिश्चितैर्विशेषतो निश्चितार्थैः ॥ ५ ॥



सारा०ब०—तत्र क्षेत्रस्य स्वरूपमाह—महाभूतान्याकाशादीन्यहङ्कारस्तत्कारणम्, बुद्धिर्विज्ञानात्मकं महत्तत्त्वमहङ्कारकारणमव्यक्तं प्रकृतिर्महत्तत्त्वकारणमिन्द्रियाणि श्रोत्रादीनि दशैकञ्च मनः, इन्द्रियगोचराः पञ्च शब्दादयो विषयास्तदेवं चतुर्विंशतितत्त्वात्मकमिति । इच्छादयः प्रसिद्धाः, संघातः पञ्चमहाभूतपरिणामो देहः, चेतना ज्ञानात्मिका मनोवृत्तिर्धृतिर्धैर्य्यम्—इच्छादयश्चैते मनोधर्म्मा एव न त्वात्मधर्म्माः । अतः क्षेत्रान्तःपातिन एव । उपलक्षणञ्चैतत्त सङ्कल्पादीनाम्—तथा च श्रुतिः "कामः सङ्कल्पो विचिकित्सा श्रद्धाधृतिर्ह्रीर्धीर्भीरित्येतत् सर्व्वं मन एव" इति । अनेन यावन्ति प्रतिज्ञाताः क्षेत्रधर्म्मा दर्शिताः । एतत् क्षेत्रं सविकारं जन्मादिषड्विकारसहितम् ॥ ६-७ ॥

सारा०ब०—उक्तलक्षणात् क्षेत्राद्विविक्ततया ज्ञेयौ जीवात्मपरमात्मानौ क्षेत्रज्ञौ विस्तरेण वर्णयिष्यन् तज्ज्ञानस्य साधनान्यमानित्वादीनि विंशतिमाह पञ्चभिः । अत्राष्टादश भक्तानां ज्ञानिनाञ्च साधारणानि किन्तु भक्तैः "मयि चानन्ययोगेन भक्तिरव्यभिचारिणी" इत्येकमेव भगवदनुभवसाधनत्वेन यत्नतः क्रियते । अन्यानि सप्तदशोक्ताभ्यासवतां तेषां स्वतएवोत्पद्यन्ते न तु तेषु यत्न इति साम्प्रदायिकाः । अन्तिमे द्वे तु ज्ञानिनामसाधारण एव । अत्रामानित्वादीनि विस्पष्टार्थानि । शौचं बाह्यमाभ्यन्तरञ्च तथा च स्मृतिः—"शौचञ्च द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा । मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथान्तरम् ॥" इति, आत्मविनिग्रहः शरीरसंयमः ; जन्मादिषु दुःखरूपस्य दोषस्यानुदर्शनं पुनः पुनः पर्य्यालोचनम् ; असक्तिः पुत्रादिषु प्रीतित्यागोऽनभिष्वङ्गः पुत्रादीनां सुखेदुःखे चाहमेव सुखी दुःखीत्यध्यासाभाव इष्टानिष्टयोर्व्यवहारिकयोरुपपत्तिषु प्राप्तिषु नित्यं सर्व्वदा समचित्तत्वम् ; मयि श्यामसुन्दराकारेऽनन्ययोगेन

ज्ञानकर्म्मतपोयोगाद्यमिश्रणेन भक्तिश्च-काराद्ज्ञानादिमिश्रण-प्राधान्येन च। आद्या भक्तैरनुष्ठेया, द्वितीया ज्ञानिभिरिति केचिदन्ये त्वनन्या भक्तिर्यथाप्रेम्णः साधनं तथा परमात्मानुभवस्यापीति ज्ञापनार्थमत्र षट्केऽप्युक्तिरिति भक्ता व्याचक्षते, ज्ञानिनस्त्वनन्येवं योगेन सर्व्वात्मदृष्ट्येति। अव्यभिचारिणी–प्रतिदिनमेव कर्त्तव्या, 'केनापि निवारयितुमशक्या' इति मधुसूदनसरस्वतीपादाः। आत्मानमधिकृत्य वर्त्तमानं ज्ञानमध्यात्मज्ञानम्, तस्य नित्यत्वं नित्यानुष्ठेयत्वं पदार्थशुद्धिनिष्ठत्वमित्यर्थः। तत्त्वज्ञानस्यार्थः प्रयोजनं मोक्षस्तस्य दर्शनं स्वाभीष्टत्वेनालोचनमित्यर्थः। एतद्विंशतिकं ज्ञानं साधारण्येन जीवात्मपरमात्मनोर्ज्ञानस्य साधनम्। असाधारणं परमात्मज्ञानं त्वग्रे वक्तव्यम्। ततोऽन्यथास्माद्विपरीतं मानित्वादिकम् ॥ ८-१२ ॥

गी०भू०—'तत् क्षेत्रं यच्च' इत्याद्यर्द्धकेन वक्तुं प्रतिज्ञातं क्षेत्रस्वरूपमाह–महाभूतानीति द्वाभ्याम्। महाभूतानि पञ्च खादीन्यहङ्कारस्तद्धेतुस्तामसो भूतादिसंज्ञो वुद्धिस्तद्धेतुर्ज्ञानप्रधानो महानव्यक्तं तद्धेतुः त्रिगुणावस्थं प्रधानमिन्द्रियाणि श्रोत्रादीनि पञ्च वागादीनि च पञ्चेति दश बाह्यानि राजसाहङ्कारकार्य्याण्येकं सात्त्विकाहङ्कारकार्य्यमन्तरिन्द्रियं मन इत्येवमेकादशेन्द्रियाणीन्द्रियगोचराः पञ्चेति भूतादि-खाद्यन्तरालिकाः सूक्ष्माः शब्दादितन्मात्राः खादिविशेषगुणतया व्यक्ताः सन्तः स्थूलाः श्रोत्रादिपञ्चकग्राह्या विषया इत्यर्थः। एवं चतुर्विंशति-तत्त्वात्मकं क्षेत्रं ज्ञेयम्। इच्छादयश्चत्वारः प्रसिद्धाः संकल्पादीनामुपलक्षणमेतत्, एते मनोधर्म्माः–"कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्व्वं मन एव" इति श्रुतेः। यद्यप्यात्मधर्म्मा इच्छादयो "य आत्मा" इत्यादौ "सत्यकामः सत्यसंकल्पः" इति श्रवणात्, "पठेद्य इच्छेत् पुरुषः" इति सहस्रनामस्तोत्रात्, "पुरुषः सुख-



दुःखानां भोक्तृत्वे हेतुरुच्यते" इति वक्ष्यमाणाच्च, तथापि मनोद्वाराभिव्यक्तेर्मनोधर्म्मत्वमतः क्षेत्रान्तःपातः संघातो भूतपरिणामो देहः, स च चेतना धृतिर्भोगाय मोक्षाय च यतमानस्य चेतनस्य जीवस्याधारतयोत्पन्न इत्यर्थः। अत्र प्रधानादिद्रव्याणि क्षेत्रारम्भकाणीति, यच्चेत्यस्य श्रोत्रादीन्द्रियाणि श्रोत्राश्रितानीति, यादृगित्यस्येच्छादीनि क्षेत्रकार्य्याणीति, यद्विकारीत्यस्य चेतना धृतिरिति, यतश्चेत्यस्य संघात इति, यदित्यस्योत्तरमुक्तम्, एतत् क्षेत्रं सविकारं जन्मादिषड्विकारोपेतमुदाहृतमुक्तम् ॥५-६॥

गी०भू०—अथोक्तात् क्षेत्राद्विभिन्नत्वेन ज्ञेयं क्षेत्रज्ञद्वयं विस्तरेण निरूपयिष्यन् तज्ज्ञानसाधनान्यमानित्वादीनि विंशतिमाह पञ्चभिः–अमानित्वं स्वसत्कारानपेक्षत्वम्, अदम्भित्वं धार्म्मिकत्वख्यातिफलकधर्म्माचरणविरहः, अहिंसा परापीड़नम्, क्षान्तिरपमानसहिष्णुता, आर्जवं छद्मिष्वपि सारल्यम्, आचार्य्योपासनं ज्ञानप्रदस्य गुरोरकैतवेन संसेवनम्, शौचं बाह्याभ्यन्तरपावित्र्यम्–"शौचञ्च द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा। मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथान्तरम् ॥" इति स्मृतेः, स्थैर्य्यं सद्वर्त्मैकनिष्ठत्वम्, आत्मविनिग्रह आत्मानुसन्धिप्रतीपाद्विषयान्मनसो नियमनम्, इन्द्रियार्थेषु शब्दादिविषयेषु प्रतीपेषु वैराग्यं रुच्यभावः, अनहङ्कारो देहादिष्वात्माभिमानत्यागः, जन्मादिषु दुःखरूपस्य दोषस्यानुदर्शनं पुनःपुनश्चिन्तनम्, पुत्रादिषु परमार्थप्रतीपेष्वसक्तिः प्रीतित्यागः, अनभिष्वङ्गस्तेषु सुखिषु दुःखिषु च सत्सु तत्सुखदुःखानभिनिवेशः, इष्टानिष्टानामनुकूलप्रतिकूलानामर्थानामुपपत्तिषु प्राप्तिषु समचित्तत्वं हर्षविषादविरहः, नित्यं सर्व्वदा, मयि परेशेऽव्यभिचारिणी स्थिरा भक्तिः श्रवणाद्या–अनन्ययोगेनैकान्तित्वेन मद्भक्तसेवा, तथा विविक्तदेश-

सेबित्वं निर्जनस्थानप्रियता, जनानां ग्राम्याणां संसदि रतित्यागः, अध्यात्ममात्मनि यज्ज्ञानं तस्य नित्यत्वं सर्व्वदा बिमृश्यत्वम्, तत्त्वं त्वहमेव परं ब्रह्म–"बदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम्" इत्यादिस्मृतेः, तज्ज्ञानस्य योऽर्थस्तत्प्राप्तिलक्षणस्तस्य दर्शनं हृदि स्मरणम्। एतदमानित्वादिकं ज्ञानं परम्परया साक्षाच्च तदुपलब्धिसाधनं प्रोक्तम्–'ज्ञायते उपलभ्यतेऽनेन' इति व्युत्पत्तेः, यत्ततोऽन्यथा बिपरीतं मानित्वादि, तदज्ञानं तदुपलब्धिबिरोधीति ॥७-११॥

गी०भू०—एवं ज्ञानसाधनान्युपदिश्य तैर्ज्ञेयमुपदिशति-ज्ञेयं यत्तदिति। उक्तैः साधनैर्यज्ज्ञेयमुपलभ्यं जीबात्मबस्तु च, तदहं प्रकर्षेण सुबोधतया बक्ष्यामि-यज्ज्ञात्वा जनोऽमृतं मोक्षमश्नुते लभते। तत्र जीवात्मबस्तूपदिशति-अनादीत्यर्द्धकेन। नास्त्यादिर्यस्य तत् जीबस्याद्युत्पत्तिर्नास्त्यतोऽन्तोऽपि नेति नित्याऽसाबित्यर्थः, एवमाह श्रुतिः-"न जायते म्रियते वा बिपश्चित्" इत्याद्या। अहमेव परः स्वामी यस्य तत्–"प्रधानक्षेत्रज्ञपतिर्गुणेशः" इति श्रुतेः, "दासभूतो हरेरेब नान्यस्यैव कदाचन" इति स्मृतेश्च। अपहतपाप्मत्वादिना ब्रह्म बृहता गुणाष्टकेन विशिष्टम्; श्रुतिश्चैवमाह–"य आत्मापहतपाप्मा बिजरो बिमृत्युर्विशोको विजिघित्सोऽपिपासः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स बिजिज्ञासितव्यः" इति; जीवे ब्रह्मशब्दस्तु–"बिज्ञानं ब्रह्म चेद्वेद" इत्यादि श्रुतेः, 'स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते', "ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति" इति बक्ष्यमाणाच्च। न सदिति तद्बिशुद्धं जीबात्मबस्तु कार्य्यकारणात्मकावस्थाद्वयबिरहात् सच्चासच्च नोच्यते, किन्तु परमाणुचैतन्यं गुणाष्टकबिशिष्टमुच्यते–बिभक्तनामरूपं कार्य्याबस्थं सदुपमर्दितनामरूपं कारणाबस्थं त्वसदित्यर्थः ॥१२॥



सारा०व०—एवं साधनैर्ज्ञेयो जीवात्मा परमात्मा च। तत्र परमात्मैव सर्व्वगतो 'ब्रह्म'-शब्देनोच्यते। तच्च ब्रह्म निर्व्विशेषं सबिशेषञ्च क्रमेण ज्ञानिभक्तयोरुपास्यम्। देहगतोऽपि चतुर्भुजत्वेन ध्येयः परमात्म-शब्देनोच्यते। तत्र प्रथमं ब्रह्माह—ज्ञेयमिति। अनादि न विद्यते आदिर्यस्य मत्स्वरूपत्वान्नित्यमित्यर्थः। मत्परमहमेब पर उत्कृष्ट आश्रयो यस्य तत्, "ब्रह्मणो हि प्रतिष्ठाहम्" इति मदग्रिमोक्तेः। तदेब किमित्यपेक्षायामाह—तद्ब्रह्म-न सत्, नाप्यसत् कार्य्यकारणातीतमित्यर्थः ॥ १२ ॥

सर्वतःपाणिपादं तत्सर्वतोऽक्षिशिरोमुखम्।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥१३॥

सारा०ब०-नन्वेवं ब्रह्मणः सदसद्बिलक्षणत्वे सति "सर्व्वं खल्विदं ब्रह्म" "ब्रह्मैवेदं सर्व्वम्" इत्यादि श्रुतिर्विरुध्येतेत्याशङ्क्य स्वरूपतः कार्य्यकारणातीतत्वेऽपि शक्तिशक्तिमतोरभेदात् कार्य्यकारणात्मकमपि तदित्याह-सर्व्वत एव पाणयः पादाश्च यस्य तत्, ब्रह्मादिपिपीलिकान्तानां पाणिपादबृन्दैः सर्व्वत्रदृष्टैरेब तद्ब्रह्मैबासंख्यपाणिपादैर्युक्तमित्यर्थः। एबमेव सर्व्वतोऽक्षीत्यादि ॥ १३ ॥

गी०भू०—अथ परमात्मबस्तूपदिशति-सर्व्वतः पाणीति। तत् परमात्मबस्तु; 'सर्व्वतः पाणिपादम्' इत्यादि बिस्फुटार्थम् ॥१३

सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम्।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥१४॥

सारा०ब०—किञ्च सर्व्वाणीन्द्रियाणि गुणानिन्द्रियबिषयांश्चाभासयतीति "तच्चक्षुषश्चक्षुः" इत्यादि श्रुतेः, यद्वा सर्व्वेन्द्रियैर्गुणैः शब्दादिभिश्चाभासते बिराजतीति तत्। तदपि सर्व्वे-

न्द्रियबिवर्जितं प्राकृतेन्द्रियादिरहितम्, तथा च श्रुतिः-"अपा-
णिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः"इत्यादि,
"परास्य शक्तिर्वहुधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च"
इति श्रुतिप्रसिद्धस्वरूपशक्त्यास्पदत्वातिदि भावः। असक्तमा-
सक्तिशून्यं, सर्व्वभृत श्रीबिष्णुस्वरूपेण सर्व्वपालकं, निर्गुणं
सत्त्वादिगुणरहिताकारम्। किञ्च गुणभोक्तृत्रिगुणातीत-'भग'
शब्दबाच्य--षड्गुणास्वादकम्॥ १४॥

गी०भू०—किञ्च,'सर्व्वेति-सर्व्वैरिन्द्रियैर्गुणैश्च तद्वृत्तिभि-
राभासते दीप्यत इति तथा, सर्व्वैरिन्द्रियैर्जीबेन्द्रियबत स्वरूप-
भिन्नैर्विवर्जितं संत्यक्तं प्राकृतैः करणैः शून्यः स्वरूपानुबन्धिभि-
स्तैर्बिशिष्टो हरिरिति स्वीकार्य्यम्। "अपाणिपादो जवनो ग्रहीता
पश्यत्यचक्षुः स शृणोत्यकर्णः", "यदात्मको भगवांस्तदात्मिका
व्यक्तिः किमात्मको भगवान् ज्ञानात्मक 'ऐश्वर्य्यात्मकः शक्त्या-
त्मकश्चेति वुद्धिमनोऽङ्गप्रत्यङ्गबत्तां भगवतो लक्षयामहे-"वुद्धि-
मान्मनोबानङ्गप्रत्यङ्गबान्" इति श्रुतेः; सर्व्वभृत सर्व्वतत्त्व-
धारकमप्यसक्तं सङ्कल्पेनैव तद्धारणात्तत्स्पर्शरहितं निर्गुणं-
"साक्षी चेताः केवलो निर्गुणश्च" इति श्रुतेर्मायागुणास्पृष्टमेव
सद्गुणभोक्तृ नियम्यतया "गुणानुभबि-बिकारजननीमज्ञाम्"
इत्यारभ्य "एकस्तु पिवते देवः स्वच्छन्दोऽत्र बशानुगाम्। ध्यान-
क्रियाभ्यां भगवान् भुङ्क्तेऽसौ प्रसभं बिभुः॥" इति श्रव-
णात्॥१४॥

**बहिरन्तश्च भूतानामचरं चरमेव च।**
**सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत्॥१५॥**

सारा०ब०—भूतानां स्वकार्य्याणां बहिश्चान्तश्च यथा देहा-
नामाकाशादिकम्, अचरं स्थावरं चरं जङ्गमञ्च भूतजातं तदेब,



कार्य्यस्य कारणात्मकत्वात्। एवमपि रूपादिभिन्नत्वात तद-
बिज्ञेयमिदं तदिति स्पष्टं ज्ञानार्हं न भवतीत्यतएबाबिदुषां
योजनकोट्यन्तरमिब दूरस्थम्, बिदुषां पुनः स्वगृहस्थितमि-
बान्तिके च तत्स्वदेह एबान्तर्य्यामित्वात,-"दूरात् सुदूरे तदि-
हान्तिके च पश्यत्स्विहैव निहितं गुहायाम्" इत्यादि-श्रुतिभ्यः॥१५

गी०भू०—बहिरित—भूतानां चिज्जडात्मकानां तत्त्वानां वहि-
रन्तश्च स्थितम्-"अन्तर्व्वहिश्च तत् सर्व्वं व्याप्य नारायणः
स्थितः" इति श्रवणात्; अचरमचलं चरं चलं च-"आसीनो
दूरं ब्रजति शयानो याति सर्व्वतः" इति श्रुतेः; सूक्ष्मत्वात
प्रत्यक्त्वाच्चित्सुखमूर्त्तित्वादविज्ञेयं देवनान्तरबज्ज्ञातुमशक्यमतो
दूरस्थञ्चेति-"यन्मनसा न मनुते न चक्षुषा पश्यति कश्चनैनम्"
इति श्रुतेः; गान्धर्व्व-बासितेन श्रोत्रेण षड्जादिबद्भक्तिभा-
बितेन करणेन तु शक्यं तज्ज्ञातुमित्याह-अन्तिके च तदिति;
"मनसैबानुद्रष्टव्यम्", "कश्चिद्धीरः प्रत्यगात्मानमैक्षत्" "भक्ति-
योगे हि तिष्ठति" इत्यादि-श्रवणात्, "भक्त्या त्वनन्यया शक्यः"
इत्यादि-स्मृतेश्च॥१५॥

**अविभक्तं च भूतेषु विभक्तमिव च स्थितम्।**
**भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च॥१६॥**

सारा०ब०—भूतेषु स्थावरजङ्गमात्मकेष्वबिभक्तं कारणात्म-
नाभिन्नं कार्य्यात्मना बिभक्तं भिन्नमिव स्थितम्, तदेब श्री-
नारायणस्वरूपं सत् भूतानां भर्त्तृ स्थितिकाले पालकम्,
प्रलयकाले ग्रसिष्णु संहारकम्, स्थितिकाले प्रभबिष्णु च-नाना-
कार्य्यात्मना प्रभवनशीलम्॥ १६॥

गी०भू०—अविभक्तमिति। बिभक्तेषु मिथो भिन्नेषु जीवेष्व-
बिभक्तमेकं तद्ब्रह्म बिभक्तमिव प्रतिजीवं भिन्नमिव स्थितम्-

"एकं सन्तं बहुधा दृश्यमानम्" इति श्रुतेः, "एक एव परो विष्णुः सर्व्वत्रापि न संशयः । ऐश्वर्य्याद्रूपमेकञ्च सूर्य्यवद्बहुधेयते ॥" इति स्मृतेश्च । तच्च भूतभर्त्तृ स्थितौ भूतानां पालकं प्रलये तेषां ग्रसिष्णु कालशक्त्या संहारकं, सर्गे प्रभविष्णु प्रधानजीवशक्तिभ्यां नानाकार्य्यात्मना प्रभवनशीलम्; श्रुतिश्च—"यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति तद्ब्रह्म तद्विजिज्ञासस्व" इति ॥१६॥

ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य धिष्ठितम् ॥१७॥

सारा०ब०—ज्योतिषां चन्द्रादित्यादीनामपि तज्ज्योतिः प्रकाशकं येन सूर्य्यस्तपति तेजसेन्द्रः—"न तत्र सूर्य्यो भाति न चन्द्रतारकं, नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्व्वं तस्य भासा सर्व्वमिदं विभाति ॥" इत्यादि श्रुतेः । अतएव तमसोऽज्ञानात् परं तेनास्पृष्टम्, उच्यते—"आदित्यवर्णं तमसः परस्तात्" इत्यादि-श्रुतेः । ज्ञानं तदेव बुद्धिवृत्तावभिव्यक्तं सत् ज्ञानमुच्यते, तदेव रूपाद्याकारेण परिणतं ज्ञेयञ्च, तदेव ज्ञानगम्यं पूर्व्वोक्तेनामानित्वादि-ज्ञान-साधनेन प्राप्यमित्यर्थः । तदेव परमात्मस्वरूपं सत् सर्व्वस्य प्राणिमात्रस्य हृदि धिष्ठितं नियन्तृतयाधिष्ठाय स्थितमित्यर्थः ॥१७॥

गी०भू०—ज्योतिषां सूर्य्यादीनामपि तद्ब्रह्म ज्योतिः प्रकाशकं—"न तत्र सूर्य्यो भाति न चन्द्रतारके नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्व्वं तस्य भासा सर्व्वमिदं विभाति ॥" इत्यादिश्रुतेस्तद्ब्रह्म तमसः प्रकृतेः परं तेनास्पृष्टमुच्यते—"आदित्यवर्णं तमसः परस्तात्" इति श्रुत्या; ज्ञानं चिदेकरसमुच्यते—"विज्ञानमानन्दघनं ब्रह्म" इति श्रुत्या; ज्ञानं



मुमुक्षोः शरणत्वेन ज्ञातुमर्हमुच्यते—"तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये" इति श्रुत्या, ज्ञानगम्यमुच्यते—"तमेव विदित्वातिमृत्युमेति" इति श्रुत्या, सर्व्वस्य प्राणिजातस्य हृदि धिष्ठितं नियन्तृतया स्थितमुच्यते—"अन्तःप्रविष्टः शास्ता जनानाम्" इति श्रुत्या । न च 'सर्व्वतः पाणि' इत्यादिपञ्चकं जीवपरतयैव नेयं, तत्प्रकरणत्वादि-वाच्यं-जीववदीश्वरस्यापि क्षेत्रज्ञत्वेन प्रकृतत्वात् । 'सर्व्वतः पाणि' इत्यादि-सार्द्धकस्य ब्रह्मैवोपक्रम्य श्वेताश्वतरैः पठितत्वात् प्रकरणशावल्यस्योपनिषत्सु वीक्षणाच्च ॥१७॥

इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥१८॥

सारा०ब०—उक्तं क्षेत्रादिकमधिकारिफलसहितमुपसंहरति—इतीति । क्षेत्रम्—महाभूतादि धृत्यन्तम् ( ६-७ ) ज्ञानम्—अमानित्वादि तत्त्वज्ञानार्थदर्शनान्तम् ( ८--१२ ) ज्ञेयं ज्ञानगम्यञ्च—अनादीत्यादि धिष्ठितमित्यन्तम् ( १३-१८ ) एकमेव तत्त्वं ब्रह्म-भगवत् परमात्म-शब्दवाच्यञ्च संक्षेपेणोक्तम् । मद्भक्तो भक्तिमज्ज्ञानी मद्भावाय मत्सायुज्याय, यद्वा मद्भक्तो ममैकान्तिको दास एतद्विज्ञाय मत्प्रभोरेतावदैश्वर्य्यमिति ज्ञात्वा मयि भावाय प्रेम्ण उपपद्यत उपपन्नो भवति ॥ १८ ॥

गी०भू०—उक्तं क्षेत्रादिकं तज्ज्ञानफलसहितमुपसंहरति—इति क्षेत्रमिति । 'महाभूतानि' इत्यादिना 'चेतना धृतिः' इत्यन्तेन क्षेत्रस्वरूपमुक्तम्; 'अमानित्वम्' इत्यादिना 'तत्त्वज्ञानार्थदर्शनम्' इत्यन्तेन ज्ञेयस्य क्षेत्रज्ञद्वयस्य ज्ञानं तत्साधनमुक्तम्' 'अनादिमत्परम्' इत्यादिना 'हृदि सर्व्वस्य धिष्ठितम्' इत्यन्तेन ज्ञेयं क्षेत्रज्ञद्वयं चोक्तं मया । एतत्त्रयं विज्ञाय मिथो विवेकेनावगत्य मद्भावाय मत्प्रे-

ण्ये मत्स्वभावाय बासंसारित्वाय कल्पते योग्योभवति मद्भक्तः ॥१८

प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
बिकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥१९॥

सारा०ब०—परमात्मानमुक्त्वा क्षेत्रज्ञशब्दबाच्यं जीबात्मानं बक्तुं कुतस्तस्य माया-संश्लेषः कदा तदारम्भोऽभूदित्यपेक्षाया-माह–प्रकृतिं मायां पुरुषं जीवञ्च उभावपि अनादी न बिद्यते आदि कारणं ययोः तथाभूतौ बिद्धि, अनादेरीश्वरस्य मम शक्तित्वात्। "भूमिरापोऽनलो बायुः खं मनो बुद्धिरेव च । अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्। जीवभूतां महाबाहो ययेदं धार्य्यते जगत् ॥" इति मदुक्तेर्मायाजीवयोरपि मच्छक्तित्वेन अनादि-त्वात् तयोः संश्लेषोऽप्यनादिरिति भावः। तत्र मिथः संश्लिष्ट-योरपि तयोर्व्वस्तुतः पार्थक्यमस्त्येव इत्याह–बिकारांश्च देहेन्द्री-यादीन् गुणांश्च गुणपरिणामान् सुखदुःखशोकमोहादीन् प्रकृतिसम्भूतान् प्रकृत्युद्भूतान् बिद्धीति क्षेत्राकारपरिणतायाः प्रकृतेः सकाशाद्भिन्नमेव जीवं बिद्धीति भावः॥ १९ ॥

गी०भू०—एवं मिथो बिबिक्तस्वभावयोरनाद्योः प्रकृति-जीवयोः संसर्गस्यानादिकालिकत्वं संसृष्टयोस्तयोः कार्य्यभेदस्त-त्संसर्गस्यानादिकालिकस्य हेतुश्च निरूप्यते–प्रकृतिमित्यादिभिः। अपिस्वधृतौ ; मिथःसंपृक्तौ प्रकृतिपुरुषावुभावनाद्येव बिद्धि–मदीयशक्तित्वान्नित्यावेव जानीहि–तयोर्मच्छक्तित्वं तु पुरैवोक्तं 'भूमिरापः' इत्यादिना। अनादिसंसृष्टयोरपि तयोः स्वरूपभेदो-ऽस्तीत्याशयेनाह–बिकारान् देहेन्द्रियादीन्, गुणांश्च सुख-दुःखानि प्रकृतिसम्भबान् प्राकृतान्, न तु जैबान् बिद्धीति क्षेत्रात्मना परिणतायाः प्रकृतेरन्यो जीब इति दर्शितम् ॥१९॥



कार्यकरणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥२०॥

सारा०ब०—तस्य माया-संश्लेषं दर्शयति–कार्य्यं शरीरं कारणानि सुखदुःखसाधनानीन्द्रियाणि कर्त्तॄर इन्द्रियाधिष्ठा-तारो देबास्तत्र तथाध्यासेन पुरुषस्य तद्भावापत्तौ हेतुः प्रकृति-रेब स्यात्–प्रकृतिरेब पुरुषसंसर्गात् कार्य्यादिरूपेण परिणता स्यात्, अबिद्याख्यया स्ववृत्त्या तदध्यासप्रदा च स्यादित्यर्थः। तत्कृतसुखदुःखानां भोक्तृत्वे तु पुरुषो जीव एब हेतुः। अयं भावः–यद्यपि कार्य्यत्वकारणत्वकर्त्तृत्वभोक्तृत्वानि प्रकृतिधर्म्मा एब स्युस्तदपि कार्य्यत्वादिषु जडांशप्राधान्यात्, सुखदुःख-संवेदनरूपे भोगे तु चैतन्यांशप्राधान्यात्, प्राधान्येन व्यपदेशा भवन्तीति न्यायात् कार्य्यत्वादिषु प्रकृतिर्हेतुर्भोक्तृत्वे पुरुषो हेतुरित्युच्यत इति ॥ २० ॥

गी०भू०—अथ संसृष्टयोस्तयोः कार्य्यभेदमाह–कार्य्येति–शरीरं कार्य्यं, ज्ञानकर्म्मसाधकत्वादिन्द्रियाणि कारणानि तेषां कर्त्तृत्वे तत्तदाकार-स्वपरिणामे प्रकृतिर्हेतुः। 'पुरुषः प्रकृतिस्थो हि' इत्यग्रिमात् स्वसंसर्गेण सचेतनां प्रकृतिं पुरुषोऽधितिष्ठति, तदधिष्ठिता तु सा तत्कर्म्मानुगुण्येन परिणममाना तत्तद्देहादीनां स्रष्ट्रीति–प्रकृत्यार्पितानां सुखादीनां भोक्तृत्वे पुरुषो हेतुस्तेषां भोगे स एव कर्त्तेत्यर्थः। प्रकृत्यधिष्ठातृत्वं सुखादिभोक्तृत्वञ्च पुरुषस्य कार्य्यम्, तच्च शरीरादिकर्त्तृत्वं तु तदधिष्ठितायाः प्रकृतेरिति पुरुषस्यैव कर्त्तृत्वं मुख्यम्; एबमाह सूत्रकारः–"कर्त्ता शास्त्रार्थ-बत्त्वात्" इत्यादिभिः। परेशस्य हरेरधिष्ठातृत्वं तु सर्व्वत्राबर्ज्ज-नीयमित्युक्तं बक्ष्यते च ॥२०॥

पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान् ।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥२१॥

सारा०ब०—किन्तु तत्रानाद्यबिद्या-कृतेनाध्यासेनैव कर्त्तृत्व-भोक्तृत्वादिकं तदीयमपि धर्म्मं स्वीयं मन्यते तत एवास्य संसार इत्याह—पुरुष इति। प्रकृतिस्थः प्रकृतिकार्य्यदेहे तादात्म्येन हि स्थितः। प्रकृतिजान् अन्तःकरणधर्म्मान् शोकमोह-सुखदुःखादीन् गुणान् स्वीयानेवाभिमन्यमानो भुङ्क्ते। तत्र कारणं गुणसङ्गः, गुणमयदेहेषु अस्यानासङ्गस्याप्यात्मनः सङ्गोऽविद्याकल्पितः। क भुङ्क्त इत्यपेक्षायामाह—सतीषु देवादि-योनिष्वसतीषु तिर्य्यगादियोनिषु शुभाशुभकर्म्मकृतासु यानि जन्मानि तेषु ॥ २१ ॥

गी०भू०—प्रकृत्यधिष्ठाने सुखादिभोगे च पुरुषस्यैव कर्त्तृत्व-मित्येतत् स्फुटयति, तस्य प्रकृतिसंसर्गे हेतुञ्च दर्शयति पुरुष इति। चित्सुखैकरसोऽपि पुरुषोऽनादिकर्म्मबासनया प्रकृतिस्थस्तामधि-ष्ठिततत्कृतदेहेन्द्रियः प्राणबिशिष्टः सन्नेव तत्कृतान् गुणान् सुखा-दीन् भुङ्क्तेऽनुभवति केत्याह—सदिति। सतीषु देवमानवादि-ष्वसतीषु पशुपक्ष्यादिषु च साध्वसाधुरचितासु योनिषु यानि जन्मादीनि, तेष्विति तत्र तत्र पुरुषस्यैव कर्त्तृत्वम्। तत्संसर्गे हेतु-माह—कारणमिति। गुणोऽसङ्गोऽनादिगुणमयबिषयस्पृहा। अय-मर्थः—अनादिर्जीवः कर्म्मरूपानादिबासनारक्तः; स च भोक्तृ-त्वाद्भोग्यान् बिषयान् स्पृहयंस्तदर्पिकामनादिसन्निहितां प्रकृति-माश्रयिष्यति यावत् सत्प्रसङ्गात्तत्तद्वासना क्षीयते; तत्क्षये तु परा-त्मधामसुखानि भुङ्क्ते—"सोऽश्नूते सर्व्वान् कामान् सह ब्रह्मणा बिपश्चिता" इत्यादि-श्रुतिभ्य इति। यत्तु प्रकृतेरित्यादेः कार्य्य-कारणेत्यादेः प्रकृत्यैव चेत्यादेर्नान्यं गुणेभ्य इत्यादेश्चापाततार्थ-ग्राहिभिः सांख्यैः प्रकृतेरेव कर्त्तृत्वमुक्तं, तत् किल रभसाभि-



धानमेव लोष्ट्रकाष्ठवदचेतनायास्तस्यास्तत्त्वसम्भावात्। उपादाना-परोक्षचिकीर्षाकृतिमत्त्वं खलु कर्त्तृत्वं, तच्च चेतनस्यैवेति श्रुति-राह—"बिज्ञानं यज्ञं तनुते कर्म्माणि तनुतेऽपि च", "एष हि द्रष्टा स्प्रष्टा श्रोता रसयिता घ्राता मन्ता बोद्धा कर्त्ता बिज्ञानात्मा पुरुषः" इत्यादिकम्। यच्च पुरुषसन्निधानाच्चैतन्याध्यासात्तस्या-स्तत्त्वमित्याहुस्तन्न, यत् सन्निध्यध्यस्त-चैतन्यात्तस्याः कर्त्तृत्वं, तत्त-स्यैव सन्निहितस्यैति सुवचत्वात्। न खलु तप्तायसो दग्धृत्वमयो-हेतुकमपि तु बह्निहेतुकमेव दृष्टम्; न च चलति जलं फलति तरु-रितिबज्जडायास्तस्यास्तत्त्व-सिद्धिर्जलादिष्वन्तर्याम्यधिष्ठितत्वेनेष्टा-सिद्धेर्बिधायक--श्रुतिव्याकोपाच्चैतदेवम्, न हि जड़प्रकृतिमुद्दिश्य स्वर्गादिफलकं ज्योतिष्टोमादिमोक्षफलकं ध्यानञ्च स्मृतिर्बिधत्तेऽपि तु चेतनमेव भोक्तारमुद्दिश्येति पुरुषस्यैव कर्त्तृत्वम्। तच्च प्रकृते-रिति यदुक्तं, तत्तु तद्वृत्ति-प्राचुर्य्यादेव यथा करेण बिभ्रति पुरुषे करो बिभर्त्तीति व्यपदेशस्तथा प्रकृत्या कुर्व्वति पुरुषे प्रकृतिः करोतीति स भवेदित्येके, प्राकृतैर्देहादिभिर्युक्तस्यैव पुरुषस्य यज्ञयुद्धादिकर्म्मकर्त्तृत्वं, न तु तैर्बियुक्तस्य शुद्धस्येत्यतः प्रकृतेस्तदित्यपरे ॥२१॥

उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वरः ।
परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः ॥२२॥

सारा०ब०—जीबात्मानमुक्त्वा परमात्मानमाह—उपद्रष्टेति। यद्यपि अनादि मत्परं ब्रह्मेत्यादिना हृदि सर्व्वस्य धिष्ठित-मित्यनेन च सामान्यतो बिशेषतश्च परमात्मा प्रोक्त एव तदपि तस्य जीवात्मसाहित्येनापि पृथगेव स्पष्टतया देहस्थत्वज्ञापनार्थ-मियमुक्तिर्ज्ञेया। अस्मिन् देहे परोऽन्यः पुरुषो यो महेश्वरः स परमात्मेति चाप्युक्तः, परमात्मेति च नाम्नाप्युक्तो भवती-

त्यर्थः, अत्र परम-शब्द एकात्मबादपक्षे स्वांश इति द्योतनार्थौ जीवस्योप -समीपे पृथक्स्थित एव द्रष्टा साक्षी । अनुमन्तानुमोदनकर्त्ता सन्निधिमात्रेणानुग्राहकः,--"साक्षी चेताः केवलो निर्गुणश्च" इति श्रुतेः । तथा भर्त्ता धारको भोक्ता पालकः ॥२२

गी०भू०—देहे सुखादिभोक्तृतयाबस्थितं जीबमुक्त्वा नियन्तृतया तत्राबस्थितमीश्वरमाह्–उपद्रष्टेति । अस्मिन् देहे परो जीबादन्यः पुरुषोऽस्ति-यो महेश्वरः परमात्मेति प्रोक्तः, उपद्रष्टा सन्निधौ पृथक्स्थित एब साक्षी , अनुमन्तानुमतिदाता–तदनुमतिं बिना जीवः किञ्चिदपि कर्त्तु न क्षम इत्यर्थः , भर्त्ता धारकः, भोक्ता पालकः "सर्व्वतः पाणि" इत्यादिभिरुक्तस्यापीशस्य जीवेन सह स्थितिं बक्तुं पुनरुक्तिः ॥२२॥

य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ।
सर्वथा बर्तमानोऽपि न स भूयोऽभिजायते ॥२३॥

एतज्ज्ञानफलमाह–य इति । पुरुषं परमात्मनं प्रकृतिं मायाशक्तिं, च-काराज्जीवशक्तिञ्च, सर्व्वथा बर्त्तमानोऽपि लयबिक्षेपादि-पराभूतोऽपि ॥ २३ ॥

गी०भू०—एतज्ज्ञानफलमाह्-य इति । एवं मदुक्तबिधया मिथो विबिक्ततया यः पुरुषं महेश्वरप्रकृतिं च जीबञ्च वेत्ति, सर्व्बथा व्यबहारसम्पर्केण बर्त्तमानोऽपि भूयो नाभिजायते–देहान्ते बिमुच्यत इत्यर्थः ॥२३॥

ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।
अन्ये सांख्येन योगेन कर्मयोगेन चापरे ॥२४॥

सारा०ब०—अत्र साधनविकल्पमाह–ध्यानेति द्वाभ्याम् ,–केचिद्भक्ता ध्यानेन भगवच्चिन्तनेनैब, 'भक्त्या मामभिजानाति



इत्यग्रिमोक्तेरात्मनि मनस्यात्मना स्वयमेव नत्वन्येन केनाप्युपकारकेणेत्यर्थः । अन्ये ज्ञानिनः सांख्यमात्मानात्मबिवेकस्तेन । अपरे योगिनो योगेनाष्टाङ्गेन कर्म्मयोगेन निष्कामकर्म्मणा च । अत्र सांख्याष्टाङ्गयोगनिष्कामकर्म्मयोगाः परमात्मदर्शने परस्परयैव हेतबो न तु साक्षाद्धेतबस्तेषां सात्त्विकत्वात् परमात्मनस्तु गुणातीतत्वात । किञ्च, "ज्ञानञ्च मयि संन्यसेत" इति भगवदुक्तेर्ज्ञानादिसन्न्यासानन्तरमेव "भक्त्याहमेकया ग्राह्यः" इत्युक्तेर्ज्ञानं विमुच्य तया भक्त्यैव पश्यन्ति ॥ २४ ॥

गी०भू०—महेश्वरस्य प्राप्तौ साधनबिकल्पानाह्–ध्यानेनेति द्वाभ्याम । केचिद्बिशुद्धचित्ता आत्मनि मनसि स्थितमात्मानं महेश्वरं मां ध्यानेनोपसर्ज्जनीभूतज्ञानेन पश्यन्ति साक्षात् कुर्व्बन्त्यात्मना स्वयमेव, न त्वन्येनोपकारकेण, अन्ये साङ्ख्येनोपसर्ज्जनीभूतध्यानेन ज्ञानेन पश्यन्ति, अन्य-योगेनोप-सर्ज्जनीभूतज्ञानेनाष्टाङ्गेन पश्यन्ति, अपरे तु कर्म्मयोगेनान्तर्गतध्यानज्ञानेन निष्कामेण कर्म्मणा ॥२४॥

अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते ।
तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥२५॥

सारा०ब०—अन्य इतस्ततः कथा-श्रोतारः ॥ २५ ॥

गी०भू०—अन्ये त्वेबमीदृशानुपायानजानन्तः श्रुतिपरायणास्तत्तत्कथा-श्रबणादिनिष्ठाः साम्प्रतिका अन्येभ्यस्तद्वक्तृभ्यस्तानुपायान् श्रुत्वा तं महेश्वरमुपासते, तेऽपि, शनैः चात् तत्सङ्गिनश्च क्रमेण तानुपलभ्यानुष्ठाय च मृत्युमतितरन्त्येवेति तत्कथाश्रुतिमहिमातिशयो दर्शितः ॥२५॥

यावत्संजायते किंचित्सत्त्वं स्थाबरजङ्गमम् ।
क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ॥२६॥

सारा०ब०—उक्तमेबार्थं प्रपञ्चयति यावदध्यायसमाप्ति । यावदिति यत्प्रमाणकं निकृष्टमुन्कृष्टं बा सत्त्वं प्राणिमात्रम् ।।२६।।

गी०भू०—अथानादिसंयुक्तयोः प्रकृतिजीबयोर्बियोगानुसन्धानाय तयोः संयोगेन सृष्टिं ताबदाह–याबदिति । स्थाबरजङ्गमं किञ्चित् सत्त्वं प्राणिजातं याबद्यत्प्रमाणकमुत्कृष्टमपकृष्टं च संजायते, तत् क्षेत्रक्षेत्रज्ञसंयोगाद्बिद्धि–क्षेत्रेण प्रकृत्या सह क्षेत्रज्ञयोः सम्बन्धाज्जानीहीत्यर्थः । ईश्वरः प्रकृतिजीवौ नियमयन् प्रबर्त्तयति, तौ तु मिथः सम्बध्नीत, ततो देहोत्पत्तिद्वारा प्राणिसृष्टिरित्यर्थः ।।२६।।

**समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।**

**विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ।।२७।।**

सारा०ब०—परमात्मानं त्वेवं जानीयादित्याह–सममिति । बिनश्यत्स्वपि देहेषु यः पश्यति स एब ज्ञानीत्यर्थः ।। २७ ।।

गी०भू०—अथ प्रकृतौ तत्संयुक्तेषु च जीबेषु स्थितमपीश्वरं तेभ्यो बिबिक्तं पश्येदित्याह–सममिति । यस्तत्त्ववित्प्रसङ्गी सर्व्वेषु स्थाबरजङ्गमदेहवत्सु भूतेषु जीवेषु सममेकरसं यथा स्यात्तथा तिष्ठन्तं परमेश्वरं बिनश्यत्सुतत्तद्देहबिमर्द्दे न बिनाशं गच्छत्सु तेष्वविनश्यन्तं तद्बिलक्षणं पश्यति,स एब पश्यति, तद्याथात्म्यदर्शी भबति, तथा च वैबिध्यबिनाशधर्म्मिभ्यः प्रकृतिसंयोगिभ्यो जीवेभ्य ऐकरस्याविनाशधर्म्मा परेशो बिबिक्त इति ।।२७।।

**समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम् ।**

**न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् ।।२८।।**

सारा०ब०—आत्मना मनसा कुपथगामिनात्मानं जीवं न हिनस्ति नाधःपातयति ।। २८ ।।



गी०भू०—अथोक्तबिधया तेभ्यो बिबिक्तमीश्वरं पश्यन् तद्दर्शनमहिम्ना च प्रकृतिबिकारेभ्यः स्वबिवेकञ्च लभत इत्याशयेनाह–समं पश्यन हीति । सर्व्वत्र भूतेषु समं यथा भवत्येवं सम्यगप्रच्युतस्वरूपगुणतयावस्थितमीश्वरं पश्यन्नात्मानं स्वमात्मना प्रकृतिबिकारबिवेकग्राहिणा बिषयरसगृध्नुना मनसा न हिनस्ति नाधःपातयति, स तद्रसबिरक्तेन तेन परामुत्कृष्टां गतिं तद्बिकारेभ्यः सबिबेकख्यातिं याति ।।२८।।

**प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।**

**यः पश्यति तथात्मानमकर्तारं स पश्यति ।।२९।।**

सारा०ब०—प्रकृत्यैब देहेन्द्रियाद्याकारेण परिणतया सर्व्वशः सर्व्वाण्यात्मानं जीवं देहाभिमानेनैबात्मनः कर्त्तृत्वम् , न तु स्वत इत्येवं यः पश्यतीत्यर्थः ।। २९ ।।

गी०भू०—प्रकृतेः स्वबिवेकं कथं यातीत्यपेक्षायां तत्र प्रकारमाह–प्रकृत्यैवेति द्वाभ्याम् । यः सर्व्वाणि कर्म्माणि प्रकृत्यैव, चान्मदधिष्ठितयेश्वरप्रेरितया क्रियमाणानि पश्यति, तथात्मानं तेषां कर्म्मणामकर्त्तारं पश्यति, स एब पश्यति स्वयाथात्म्यदर्शी भबति । अयमर्थः–न खलु बिज्ञानानन्दस्वभावोऽहं युद्धयज्ञादीनि दुःखमयानि कर्म्माणि करोमि, किन्त्वनादिभोगबासनेनाबिवेकिना मयाधिष्ठिता मद्भोगसिद्धये मद्बासनानुगुणेन परेशेन च सुखदुःखमोहस्वभाबा प्रकृतिरेव मद्देहादि-द्वारा तानि करोतीति तद्धेतुकत्वात् सैव तत्कर्त्रीति कर्म्मकारिण्याः प्रकृतेस्तदकर्त्ता शुद्धो जीवो बिबिक्तः, शुद्धस्यापि कर्त्तृत्वं तु पश्यतीत्यनेन व्यक्तमिति ।।२९।।

**यदा भूतपृथग्भावमेकस्थमनुपश्यति ।**

**तत एव च विस्तारं ब्रह्म संपद्यते तदा ।।३०।।**

सारा०ब०—यदा भूतानां स्थावरजङ्गमानां पृथक् भावन्तत्तदाकारगतं पार्थक्यमेकस्थमेकस्यां प्रकृतावेव स्थितं प्रलयकाले अनुपश्यंत्यालोचयति। ततः प्रकृतेः सकाशादेव भूतानां बिस्तारं सृष्टिसमयेऽनुपश्यति तदा ब्रह्म सम्पद्यते ब्रह्मैव भवतीत्यर्थः ॥३०॥

गी०भू०—यदेति-अयं जीवो यदा भूतानां देवमानवादीनां पृथग्भावं तत्तदाकारगतं देवत्व-मानवत्व-दीर्घत्व ह्रस्वत्वादिरूपं पार्थक्यमेकस्थं प्रकृतिगतमेव प्रलयेऽनुपश्यति ततः प्रकृतित एव सर्गे तेषां देवत्वादीनां बिस्तारञ्च पश्यति, न त्वात्मस्थं तत् पृथक्भावं न चात्मनस्तद्विस्तारञ्च पश्यति-स्वप्रकृतिविविक्तात्मदर्शी, तदा तद्ब्रह्म सम्पद्यते-तद्विविक्तमभिव्यक्तापहतपाप्मत्वादि-बृहद्गुणाष्टकं स्वमनुभवतीत्यर्थः ॥३०॥

अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः।
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥३१॥

सारा०ब०--ननु "कारणं गुणसङ्गोऽस्य सदसद्योनि-जन्मसु" इत्युक्तम्। तत्र देहगतत्वेन तुल्यत्वेऽपि जीवात्मैव गुणलिप्तः संसरति न तु परमात्मेति। कुत इत्यत आह—अनादित्वादिति। न बिद्यते आदिः कारणं यतः स अनादिः,--यथा पञ्चम्यन्तपदार्थेनानुत्तम शब्देन परमोत्तम उच्यते, तथैवानादिशब्देन परमकारणमुच्यते। ततश्चानादित्वात् परमकारणत्वान्निर्गुणत्वान्निर्गता गुणाः सृष्ट्यादयो यतस्तस्य भावस्तत्त्वं तस्माच्च जीवात्मनो विलक्षणोऽयं परमात्मा। अव्ययः सर्व्वदैव सर्व्वथैव स्वीय-ज्ञानानन्दादिव्ययरहितः, शरीरस्थोऽपि तद्धर्म्माग्रहणान्न करोति जीववन्न कर्त्ता न भोक्ता च भवति न च लिप्यते-शरीरगुणलिप्तश्च न भवति ॥ ३१ ॥

गी०भू०—ननु परेशमात्मानञ्च बिबिक्तं पश्यन् कृतार्थो भव-



तीत्युक्तिरयुक्ता, "एतेभ्य एव भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्यसंज्ञास्ति" इति जीवस्य देहेन सहोत्पत्तिविनाशश्रवणादिति चेत्त्राह-अनादित्वादिति। अयमात्मा जीवः शरीरस्थोऽप्यनादित्वात् परमव्ययोऽव्ययत्वप्रधानधर्म्मत्वाद्बिनाशशून्यो निर्गुणत्वाद्विशुद्धज्ञानानन्दत्वान्न युद्धयज्ञादिकर्म्म करोति, अतः शरीरेन्द्रियस्वभावेनोत्पत्तिबिनाशलक्षणेन न लिप्यते। श्रुत्यर्थस्त्वौपचारिकतया नेयः ॥३१॥

यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते।
सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥३२॥

सारा०ब०—अथ दृष्टान्तमाह-यथा सर्व्वत्र पङ्कादिष्वपि स्थितमप्याकाशं सौक्ष्याद्सङ्गत्वात् पङ्कादिभिर्न लिप्यते, तथैव परमात्मा दैहिकैर्गुणैर्दोषैश्च न युज्यत इत्यर्थः॥ ३२ ॥

गी०भू०—ननु शरीरे स्थितस्तद्धर्म्मैः कुतो न लिप्यत इत्यत्राह-यथेति। यथा सर्व्वत्र पङ्कादौ गतं प्रबिष्टमप्याकाशं सौक्ष्म्यात्तद्धर्म्मैर्न लिप्यते, तथात्मा जीवः सर्व्वत्र देवमानवादावुच्चावचे देहे स्थितोऽपि तद्धर्म्मैर्नलिप्यते सौक्ष्म्यादेव ॥३२॥

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥३३॥

सारा०ब०—प्रकाशकत्वात् प्रकाश्यधर्म्मैर्न युज्यत इति सदृष्टान्तमाह-यथेति। रविर्यथा प्रकाशकः प्रकाश्यधर्म्मैर्न युज्यते तथा क्षेत्री परमात्मा,-"सूर्य्यो यथा सर्व्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्वाह्यदोषैः। एकस्तथा सर्व्वभूतान्तरात्मा न लिप्यते शोकदुःखेन बाह्यः॥" इति श्रुतेः॥ ३३ ॥

गी०भू०—देहधर्म्मेणालिप्त एवात्मा सधर्म्मेण देहं पुष्णा-

तीत्याह-यथेति-यथैको रबिरिमं कृत्स्नं लोकं प्रकाशयति प्रभया, तथैकः क्षेत्री जीवः कृत्स्नमापादमस्तकमिदं क्षेत्रं देहं प्रकाशयति चेतयति चेतनयेत्येवमाह सूत्रकारः-"गुणाद्वा लोकवत्" इति ॥३३॥

क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।
भूतप्रकृतिमोक्षं च ये बिदुर्यान्ति ते परम् ॥३४॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्व्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मबिद्यायां योगशास्त्रे श्रीकृष्णार्ज्जुनसंबादे प्रकृतिपुरुषबिवेकयोगो नाम त्रयोदशोऽध्यायः ।



साराञ्ब०—अध्यायार्थमुपसंहरति-क्षेत्रेण सह क्षेत्रज्ञयो-र्जीबात्म-परमात्मनोर्यथा भूतानां प्राणिनां प्रकृतेः सकाशान्मोक्षं मोक्षोपायं ध्यानादिकञ्च ये बिदुस्ते परं पदं यान्ति ॥ ३४ ॥

द्वयोः क्षेत्रज्ञयोर्मध्ये जीबात्मा क्षेत्रधर्म्मभाक् ।
बध्यते मुच्यते ज्ञानादित्यध्यायार्थ ईरितः ॥ (४)
इति सारार्थबर्षिण्यां हर्षिण्यां भक्तचेतसाम् ।
त्रयोदशोऽयं गीतासु सङ्गतः सङ्गतः सताम् ॥ (५)

गी०भू०—अध्यायार्थमुपसंहरन् तज्ज्ञानफलमाह-क्षेत्रेति-क्षेत्रेण सहितयोः क्षेत्रज्ञयोर्जीवेशयोरेवं मदुक्तबिधयान्तरं भेदं ज्ञानचक्षुषा बैधर्म्यबिषयक-प्रज्ञा-नेत्रेण ये विदुस्तथा भूतानां प्रकृतेः सकाशान्मोक्षं च तत्साधनममानित्वादिकं ये बिदुस्ते प्रकृतेः परं सर्व्वोत्कृष्टं परव्योमाख्यं मत्पदं यान्तीति ॥३४॥

जीवेशौ देहमध्यस्थौ तत्राद्यो देहधर्म्मयुक् ।
बध्यते मुच्यते बोधादिति ज्ञानं त्रयोदशात् ॥

इति श्रीमद्भगवद्गीतोपनिषद्भाष्ये त्रयोदशोऽध्यायः ।



# चतुर्दशोऽध्यायः



श्रीभगवानुवाच—

परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।
यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥१॥

साराञ्ब०—गुणाः स्युर्बन्धकास्ते तु फलैर्ज्ञेयाश्चतुर्दशे ।
गुणात्यये चिन्हनतिर्हेतुर्भक्तिश्च बर्णिता ॥ (१)

पूर्व्वाध्याये "कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु" इत्युक्तम् । तत्र के गुणाः, कीदृशो गुणसङ्गः, कस्य गुणस्य सङ्गात् किं फलं स्यात्, गुणयुक्तस्य किं किं बा लक्षणम्, कथं बा गुणेभ्यो मोचनमित्यपेक्षायां बक्ष्यमाणमर्थं स्तुबानो बक्तुं प्रतिजानीते-परमिति । ज्ञायतेऽनेनेति ज्ञानमुपदेशं परमत्युत्तमम् ॥ १ ॥

गी०भू०—गुणाः स्युर्बन्धकास्ते तु परिचेयाः फलैस्त्रयः ।
मद्भक्त्या तन्निवृत्तिः स्यादिति प्रोक्तं चतुर्दशे ॥

पूर्व्वाध्याये मिथःसंपृक्तानां प्रकृतिजीवेश्वराणां स्वरूपाणि बिबिच्य जानन्नमानित्वादिधर्म्मैर्बिशिष्टः प्रकृतिबन्धाद्विमुच्यते, बन्धहेतुश्च गुणसङ्ग इत्युक्तम् । तत्र के गुणाः, कस्मिन् गुणे कथं सङ्गः, कस्य गुणस्य सङ्गात् किं फलं, गुणसङ्गिनः किम्बा लक्षणं कथं बा गुणेभ्यो मुक्तिः ?' इत्यपेक्षायां बक्ष्यमाणमर्थमात्मरुच्युत्पत्तये भगबान् स्तौति-परमिति द्वाभ्याम् । परं पूर्व्वोक्तादन्यं प्रकृतिजीबान्तर्गतमेव गुणबिषयकं ज्ञानं भूयो बक्ष्यामि-यज्ज्ञानानां प्रकृतिजीबबिषयकाणामुत्तमं श्रेष्ठं नबनीतबदुद्धृतत्वात्; यज्ज्ञात्वोपलभ्य सर्व्वे मुनयस्तन्मननशीला

इतो लोके परमात्मयाथात्म्योपलब्धिलक्षणां सिद्धिं गताः ; यद्वा ज्ञायतेऽनेनेति ज्ञानमुपदेशं, तच्च प्रागुक्तमपि भूयः पुनर्विधान्तरेण वक्ष्यामि। तच्च ज्ञानानां तपःप्रभृतीनां ज्ञानसाधनानां मध्ये परमुत्तममत्युत्तमं तदन्तरङ्गसाधनत्वात्-यज्ज्ञात्वा सर्व्वे मुनय इतो लोकात् परां मोक्षलक्षणां सिद्धिं गताः ॥१॥

**इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।**
**सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥२॥**

सारा०ब०--साधर्म्म्यं सारूप्यलक्षणां मुक्तिम्, न व्यथन्ति न व्यथन्ते ॥ २ ॥

गी०भू०--इदमिति—गुरूपासनयेदं वक्ष्यमाणं ज्ञानमुपाश्रित्य प्राप्य जनाः सर्व्वेशस्य मम नित्याविर्भूतगुणाष्टकस्य साधर्म्यं साधनाविर्भावितेन तदष्टकेन साम्यमागताः सन्तः सर्गे नोपजायन्ते, सृजिकर्म्मतां नाप्नुवन्ति, प्रलये न व्यथन्ते-मृतिकर्म्मताञ्च न यान्तीति जन्ममृत्युभ्यां रहिता मुक्ता भवन्तीति मोक्षे जीव-बहुत्वमुक्तम्, "तद्विष्णो' परमं पदं सदा पश्यन्ति सूरयः" इत्यादि-श्रुतिभ्यश्चैतदवगतम् ॥२॥

**मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम् ।**
**संभवः सर्वभूतानां ततो भवति भारत ॥३॥**

सारा०ब०--अथानाद्यविद्याकृतस्य गुणसङ्गस्य बन्धुहेतुताप्रकारं वक्तुं क्षेत्रक्षेत्रज्ञयोः सम्भवप्रकारमाह-मम परमेश्वरस्य योनिर्गर्भाधानस्थानं महद्ब्रह्म देशकालानवच्छिन्नत्वात् महत्, वृंहणात् कार्य्यरूपेण वृद्धिहेतोर्ब्रह्म प्रकृतिरित्यर्थः। श्रुतावपि क्वचित् प्रकृतिर्ब्रह्मेति निर्द्दिश्यते। तस्मिन्नहं गर्भं दधाम्यादधामि। "इतस्त्वन्यां प्रकृतिं विद्धि मे परां जीवभूताम्" इत्यनेन चेतनपुञ्जरूपा या जीव-प्रकृतिस्तटस्थशक्तिरूपा निर्द्दिष्टा सा सकलप्राणिजीवतया गर्भशब्देनोच्यते, ततो मत्कृतात् गर्भाधानात् सर्व्वभूतानां ब्रह्मादीनां सम्भव उत्पत्तिः ॥ ३ ॥



गी०भू०—तदेवं वक्तव्यार्थस्तुत्या तस्मिन् रुचिं श्रोतुरुत्पाद्य 'भूमिरापः' इत्यादिद्वयार्थानुसारात् 'यावत् सञ्जायते किञ्चित्' इत्यादौ प्रकृतिजीवसंयोगं परेशहेतुकमभिमतमिह स्फुटयति-ममेति। महत् सर्व्वस्य प्रपञ्चस्य कारणं ब्रह्माभिव्यक्त-सत्त्वादि-गुणकं प्रधानं मम सर्व्वेश्वरस्याण्डकोटिस्रष्टुर्योनिर्गर्भधारणस्थानं भवति। प्रधाने ब्रह्मशब्दश्च-"तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते" इति श्रुतेः, तस्मिन्महति ब्रह्मणि योनिभूते गर्भं परमाणुचैतन्यराशिमहं दधाम्यर्पयामि-'भूमिरापः' इत्यादिना या जड़ा प्रकृतिरुक्ता, सेह महद्ब्रह्मेत्युच्यते, 'इतस्त्वन्याम्' इत्यादिना या चेतना प्रकृतिरुक्ता, सेह सर्व्वप्राणिबीजत्वाद्गर्भशब्देनेति-भोगक्षेत्रभूतया जड़या प्रकृत्या सह चेतनभोक्तृवर्गं संयोजयामीत्यर्थः। ततो मद्धेतुकात् प्रकृतिद्वयसंयोगाद्गर्भाधानाद्वा सर्व्वभूतानां ब्रह्मादिस्तम्बान्तानां सम्भवो जनिर्भवति ॥३॥

**सर्वयोनिषु कौन्तेय मूर्त्तयः संभवन्ति याः ।**
**तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥४॥**

सारा०ब०--न केवलं सृष्ट्युत्पत्तिसमय एव सर्व्वभूतानां प्रकृतिर्माता अहं पिता, अपि तु सर्व्वदैवेत्याह-सर्व्वासु योनिषु देवाद्यासु स्तम्बपर्य्यन्तासु या मूर्त्तयो जङ्गमस्थावरात्मिका उत्पद्यन्ते, तासां मूर्त्तीनां महद्ब्रह्म प्रकृतिः-योनिरुत्पत्तिस्थानं माता, अहम्-बीजप्रदः गर्भाधानकर्त्ता पिता ॥ ४ ॥

गी०भू०—सर्व्वेति। हे कौन्तेय! सर्व्वयोनिषु देवादिस्थावरान्तासु खनिषु या मूर्त्तयस्तनवः संभवन्ति तासां महद्ब्रह्म

यौ

प्रधानं योनिरुत्पत्तिहेतुर्मतित्यर्थः, जीवप्रदस्तत्कर्म्मानुगुण्येन परमाणुचैतन्यराशिसंयोजकः परेशोऽहं पिता भवामि ॥४॥

**सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ।**
**निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥५॥**

सारा०ब०--तदेवं प्रकृतिपुरुषाभ्यां सर्व्वभूतोत्पत्तिं निरूप्येदानीं के गुणा उच्यन्ते, तेषु सङ्गात् जीवस्य कीदृशो बन्ध इत्यपेक्षायामाह-सत्त्वमिति । देहे प्रकृतिकार्य्ये तादात्म्येन स्थितं देहिनं जीवं बस्तुतोऽव्ययं निर्व्विकारमसङ्गिनमप्यनाद्यबिद्यया कृताद्गुणसङ्गादेव हेतोर्गुणा निबध्नन्ति ॥ ५ ॥

गी०भू०—अथ के गुणाः कथं तेषु पुरुषस्य सङ्गः कथं वा ते तं निबध्नन्ति' इत्याह-सत्त्वमिति चतुर्भिः । सत्त्वादिसंज्ञकास्त्रयो गुणाः प्रकृतिसम्भवाः प्रकृतेरभिव्यक्तास्ते स्वकार्य्ये देहे स्थितं पुरुषमव्ययं बस्तुतो निर्व्विकारमपि निबध्नन्त्यबिवेकगृहीतैः सुखदुःखमोहैः स्वधर्म्मैस्तं योजयन्तीति ॥५॥

**तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ।**
**सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥६॥**

सारा०ब०--तत्र सत्त्वस्य लक्षणं बन्धकत्वप्रकारञ्चाह-तत्रेति-अनामयं निरुपद्रवं शान्तमित्यर्थः, शान्तत्वात् स्वकार्य्येण सुखेन यः सङ्गः प्रकाशकत्वात् स्वकार्य्येण ज्ञानेन च यः सङ्गः 'अहं सुखी अहं ज्ञानी' चेत्युपाधिधर्म्मयोरपि सुखज्ञानयोरबिद्ययैव जीवस्याभिमानस्तेन तं बध्नाति । हे अनघेति-त्वन्तु 'अहं सुखी अहं ज्ञानी' इत्यभिमानलक्षणमघं मा स्वीकुर्व्वीति भावः ॥ ६ ॥

गी०भू०—अथ सत्त्वादीनां त्रयाणां लक्षणानि बन्धकताप्रकारांश्चाह-तत्रेति त्रिभिः । तत्र तेषु त्रिषु मध्ये सत्त्वं प्रकाशकं ज्ञानव्यञ्जकमनामयमरोगं दुःखबिरोधि-सुखव्यञ्जकमिति यावत्, कुतः ? निर्म्मलत्वात् स्वच्छत्वात्, तथा च "प्रकाशसुखकारणं सत्त्वम्" इति । तच्च सत्त्वं स्वकार्य्ये ज्ञाने सुखे च यः संयोगो 'ज्ञान्यहं' 'सुख्यहम्' इत्यभिमानस्तेन पुरुषं निबध्नाति, ज्ञानं चेदं लौकिकवस्तुयाथात्म्यबिषयं सुखञ्च देहेन्द्रियप्रसादरूपं बोध्यम् । तत्र तत्र सङ्गे सति तदुपायेषु कर्म्मसु प्रवृत्तिस्तत्फलानुभवोपायेषु देहप्राप्तिः, पुनश्च तत्र तत्र सङ्ग इति न सत्त्वाद्बिमुक्तिः ॥६॥

**रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।**
**तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनाम् ॥७॥**

सारा०ब०--रजोगुणं रागात्मकमनुरञ्जनरूपं विद्धि । तृष्णा अप्राप्तेऽर्थे अभिलाषः, सङ्गः प्राप्तेऽर्थे आसक्तिः, तयोः समुद्भवो यस्मात् तद्रजः देहिनं दृष्टादृष्टार्थेषु कर्म्मसु सङ्गेनासक्त्या बध्नाति तृष्णा-सङ्गाभ्यां कर्म्मस्वासक्तिर्भवति ॥ ७ ॥

गी०भू०—रज इति रागः स्त्रीपुरुषयोर्मिथोऽभिलाषस्तदात्मकं रजोवृद्धिहेतुकार्य्ययोस्तादात्म्यात्, तच्च तृष्णादिसमुद्भवं शब्दादिबिषयाभिलाषस्तृष्णा, पुत्रमित्रादिसंयोगोऽभिलाषः सङ्गस्तयोः सम्भवो यस्मात्तत्, तथा च "रागतृष्णासङ्गकारणं रजः" इति । तद्रजः स्त्रीबिषयपुत्रादिप्रापकेषु कर्म्मसु सङ्गेनाभिलाषेण देहिनं पुरुषं निबध्नाति-स्त्र्यादि-स्पृहया कर्म्माणि करोति, तानि तत्फलानुभवोपायभूतान् स्त्र्यादीन् प्रापयन्ति, पुनरप्येवमिति रजसो न बिमुक्तिः ॥७॥

**तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।**
**प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥८॥**

सारा०ब०--अज्ञानजमज्ञानात् स्वीयफलात् जातं प्रतीतमनुमितं भवतीत्यज्ञानजमज्ञानजनकमित्यर्थः। मोहनं भ्रान्तिजनकम्, प्रमादः अनवधानम्, आलस्यम् अनुद्यमो, निद्रा चित्तस्यावसादः ॥ ८ ॥

गी०भू०—तमस्त्विति - तु-शब्दः पूर्व्वद्वयाद्विशेषद्योतकः। वस्तुयाथात्म्यावगमो ज्ञानं तद्विरोध्यावरकता-प्रधानं प्रकृत्यंशोऽज्ञानं, तस्माज्जातं तमोऽतः सर्व्वदेहिनां मोहनं विपर्य्ययज्ञानजनकम्, तथा च "वस्तुयाथात्म्यज्ञानावरकं विपर्य्ययज्ञानजनकं तमः" इति। तत्तमः प्रमादादिभिः स्वकार्य्यैः पुरुषं निबध्नाति, तत्र प्रमादोऽनवधानमकार्य्ये कर्म्मणि प्रवृत्तिरूपं सत्त्वकार्य्यप्रकाशविरोधी, आलस्यमनुद्यमो रजःकार्य्यप्रवृत्तिविरोधि, तदुभयविरोधिनी तु निद्रा चित्तावसादात्मेति ॥८॥

सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत।
ज्ञानमावृत्य तु तमः प्रमादे संजयत्युत ॥९॥

सारा०ब०—उक्तमेवार्थं संक्षेपेण पुनर्दर्शयति-सत्त्वं कर्त्तृ सुखे स्वीयफले आसक्तं जीवं सञ्जयति वशीकरोति निबध्नातीत्यर्थः; रजः कर्त्तृ कर्म्मणि आसक्तं जीवं बध्नाति; तमः कर्त्तृ प्रमादेऽभिरतं तं ज्ञानमावृत्य अज्ञानमुत्पाद्येत्यर्थः। ९॥

गी०भू०—गुणाः स्वान्यद्वयोत्कृष्टाः सन्तः स्वकार्य्यं तन्वन्तीत्याह-सत्त्वमिति द्वाभ्याम्। सत्त्वमुत्कृष्टं सत् स्वकार्य्ये सुखे पुरुषं संजयत्यासक्तं करोति, रज उत्कृष्टं सत् कर्म्मणि तं सञ्जयति, तम उत्कृष्टं सत् प्रमादे तं सञ्जयति ज्ञानमावृत्याच्छाद्याज्ञानमुत्पाद्येत्यर्थः ॥९॥

रजस्तमश्चाभिभूय सत्त्वं भवति भारत।
रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥१०॥



सारा०ब०—उक्तं स्व-स्वकार्य्यं सुखादिकं प्रति गुणाः कथं प्रभवन्तीत्यपेक्षायामाह-रजस्तमश्चेति गुणद्वयमभिभूय तिरस्कृत्य सत्त्वं भवति-अदृष्टवशादुद्भवति; एवं रजोऽपि सत्त्वं तमश्चेति गुणद्वयमभिभूय तादृशादृष्टवशादुद्भवति; तमोऽपि सत्त्वं रजश्चोभावपि गुणावभिभूयोद्भवति ॥ १० ॥

गी०भू०—समेषु त्रिषु कथमकस्मादेकस्योत्कर्ष इति चेत् प्राचीन-तादृशकर्म्मोदयात्तादृशाहाराच्च स्यभवतीति भाववानाह-रज इति। सत्त्वं कर्त्तृ रजस्तमश्चाभिभूयो तिरस्कृत्योत्कृष्टं भवति, रजः कर्त्तृ सत्त्वं तमश्चाभिभूयोत्कृष्टं 'भवति' तमः कर्त्तृ सत्त्वं रजश्चाभिभूयोत्कृष्टं भवति, यदोत्कृष्टं भवति, तदा पूर्व्वोक्तमसाधारणं कार्य्यं करोतीति शेषः ॥१०॥

सर्वद्वारेषु देहेऽस्मिन्प्रकाश उपाजयते।
ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥११॥

सारा०ब०—बर्द्धमानो गुण एव स्वापेक्षया क्षीणावितरौ गुणावभिभवतीत्युक्तम्। अतस्तेषां वृद्धिलिङ्गान्याह-सर्व्वेति त्रिभिः। सर्व्वद्वारेषु श्रोत्रादिषु यदा प्रकाशः स्यात्, कीदृशः? ज्ञानं वैदिकशब्दादियथार्थज्ञानात्मकं तदा तादृशज्ञानलिङ्गेनैव सत्त्वं विवृद्धमिति जानीयात्। उत-शब्दादात्मोत्थसुखात्मकः प्रकाशश्च यदेति ॥ ११ ॥

गी०भू०—उत्कृष्टानां सत्त्वादीनां लिङ्गान्याह-सर्व्वेति त्रिभिः। यदा सर्व्वेषु 'ज्ञानद्वारेषु श्रोत्रादिषु शब्दादियाथात्म्यप्रकाशरूपं ज्ञानमुपजायते, तदा तादृशज्ञानलिङ्गेनास्मिन् देहे सत्त्वं विवृद्धं विद्यात्। उतेत्यप्यर्थे-सुखलिङ्गेनापि तद्विद्यादित्यर्थः ॥११॥

लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥१२॥

सारा०ब०—प्रवृत्तिर्नाना प्रयत्नपरता कर्म्मणामारम्भो गृहादिनिर्म्माणोद्यमः, अशमो बिषयभोगानुपरतिः ॥ १२ ॥

गी०भू०—लोभः स्वद्रव्यात्यागपरता, प्रवृत्तिस्तद्वृद्धियत्नपरता, कर्म्मणां गृहनिर्म्माणादीनामारम्भः, अशमो बिषयभोगादिन्द्रियाणामनुपरतिः, स्पृहा बिषयलिप्सा, एतैर्लिङ्गै रजो बिवृद्धं बिद्यात् ॥१२॥

अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥१३॥

सारा०ब०—'अप्रकाशो' बिवेकाभावः, शास्त्राबिहितशब्दादिग्रहणम्, 'अप्रवृत्तिः' प्रयत्नमात्रराहित्यम्, 'प्रमादः' कण्ठादिधृतेऽपि बस्तुनि नास्तीति प्रत्ययः 'मोहो' मिथ्याभिनिवेशः ॥१३॥

गी०भू०—अप्रकाशो ज्ञानाभावः, शास्त्राबिहितबिषयग्रहरूपोऽप्रवृत्तिः क्रियाबिमुखता, प्रमादः करादिस्थेऽप्यर्थे नास्तीति प्रत्ययो मोहो मिथ्याभिनिवेशः एतैर्लिङ्गैस्तमो बिवृद्धं बिद्यात् ॥१३॥

यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।
तदोत्तमविदां लोकानमलान्प्रतिपद्यते ॥१४॥

सारा०ब०—प्रलयं याति मृत्युं प्राप्नोति। तदा उत्तमं विन्दन्ति लभन्त इत्युत्तमबिदो हिरण्यगर्भाद्युपासकास्तेषां लोकानमलान् सुखप्रदान् ॥ १४ ॥

गी०भू०—मृतिकाले बिवृद्धानां गुणानां फलबिशेषानाह—यदेति द्वाभ्याम्। सत्त्वे प्रवृद्धे सति यदा देहभृज्जीवः प्रलयं याति म्रियते, तदोत्तमबिदां हिरण्यगर्भाद्युपासकानां लोकान् दिव्यभोगोपेतान् प्रतिपद्यते लभते, अमलान् रजस्तमो-मलहीनान् ॥१४॥



रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते ।
तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥१५॥

सारा०ब०—कर्म्मसङ्गिषु कर्म्मासक्तमनुष्येषु ॥ १५ ॥

गी०भू०—रजसि प्रवृद्धे प्रलयं मरणं गत्वा जनः कर्म्मसङ्गिषु काम्यकर्म्मासक्तेषु नृषु मध्ये जायते; तथा तमसि प्रवृद्धे प्रलीनो मृतो जनो मूढ़योनिषु पश्वादिषु जायते ॥१५॥

कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम् ।
रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥१६॥

सारा०ब०—सुकृतस्य सात्त्विकस्य कर्म्मणः सात्त्विकमेव निर्म्मलं निरुपद्रवम्; अज्ञानमचेतनता ॥ १६ ॥

गी०भू०—अथ गुणानां स्वानुरूपकर्म्मद्वारा बिचित्रफलहेतुत्वमाह—कर्म्मण इति। सुकृतस्य सात्त्विकस्य कर्म्मणो निर्म्मलं फलमाहुर्गुणस्वभावविदो मुनयो मलदुःखमोहरूप-रजस्तमःफललक्षणान्निर्गतं सुखमित्यर्थः, तच्च सात्त्विकं सत्त्वेन निर्वृत्तम। रजसो राजसस्य कर्म्मणः फलं दुःखं कार्य्यस्य कारणानुरूप्याद्-दुःखप्रचुरं किञ्चित् सुखमित्यर्थः। तमस्तामसस्य कर्म्मणो हिंसादेः फलमज्ञानचैतन्यप्रायं दुःखमेवेत्यर्थः। तत्र रजस्तमःशब्दाभ्यां राजसतामसकर्म्मणी लक्ष्ये—'गोभिः प्रीणितमत्सरम्' इत्यत्र यथा गो-शब्देन गो-पयो लक्ष्यते। सात्त्विकादिकर्म्मणां लक्षणान्यष्टादशे बक्ष्यन्ते—'नियतं सङ्गरहितम्' इत्यादिभिः ॥१६॥

सत्त्वात्संजायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥१७॥

गी०भू०—ईदृक्फलवैचित्र्ये प्रागुक्तमेव हेतुमाह—सत्त्वादिति। सत्त्वात् प्रकाशलक्षणं ज्ञानं जायते, अतः सात्त्विकस्य

कर्म्मणः प्रकाशप्रचुरं सुखं फलम् । रजसो लोभस्तृष्णा-बिशेषो यो बिषयकोटिभिरप्यभिसेवितैर्दुष्पूरस्तस्य च दुःखहेतुत्वात्त-त्पूर्व्वकस्य कर्म्मणो दुःखप्रचुरं किञ्चित् सुखं फलम् । तमसस्तु प्रमादादीनि भबन्त्यतस्तत्पूर्व्वकस्य कर्म्मणोऽचैतन्यप्रचुरं दुःख-मेव फलम् ॥१७॥

ऊर्द्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥१८॥

साराःब०—सत्त्वस्थाः सत्त्वतारतम्येनोर्द्ध्वं सत्यलोकपर्य्य-न्तम् ; मध्ये मनुष्यलोक एब । जघन्यश्चासौ गुणश्चेति तस्य वृत्तिः प्रमादालस्यादिस्तत्र स्थिता अधोगच्छन्ति नरकं यान्ति ॥१८

गी०भू०—अथ सत्त्वादिवृत्तिनिष्ठानां तान्येव फलान्यूर्द्ध्व-मध्याधो-भावेनाह-उर्द्ध्वमिति । तमसि बृत्ति-शब्दादितरयोश्च बृत्तिर्बिबक्षिता । सत्त्वस्थाः सत्त्वबृत्तिनिष्ठाः सत्त्वतारतम्येनोर्द्ध्वं सत्यलोकपर्य्यन्तं गच्छन्ति, राजसा रजोबृत्तिनिष्ठा मध्ये पुण्य-पापमिश्रिते मनुष्यलोके तिष्ठन्ति-मनुष्या एव भवन्ति रजस्तार-तम्येन । जघन्यः सत्त्वरजोऽपेक्षया निकृष्टो यो गुणस्तमःसंज्ञस्तद्-बृत्तौ प्रमादादौ स्थितास्त्वधो गच्छन्ति-तमस्तारतम्येन पशु-पक्षिस्थावरादियोनिं लभन्ते । तामसा इत्युक्तिस्तेषां सर्व्वदा तमसि स्थितिं व्यनक्ति ॥१८॥

नान्यं गुणेभ्यय: कर्तारं यदा द्रष्टानुपश्यति ।
गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥१९॥

सारा०ब०—गुणकृतं संसारं दर्शयित्वा गुणातीतं मोक्षं दर्शयति-नान्यमिति द्वाभ्याम् । गुणेभ्यः कर्त्तृकरणबिषयाकारेण परिणतेभ्योऽन्यं कर्त्तारं द्रष्टा जीबो यदा नानुपश्यति, किन्तु



गुणा एब सदैव कर्त्तार इत्येबमनुपश्यति, अनुभवतीत्यर्थः । गुणेभ्यः परं व्यतिरिक्तमेबात्मानं वेत्ति, तदा स द्रष्टा मद्भावं मयि सायुज्यमधिगच्छति प्राप्नोति । तत्र तादृश ज्ञानानन्तर-मपि मयि परां भक्तिं कृत्वैवेत्युपान्तश्लोकार्थदृष्ट्या ज्ञेयम् ॥१९॥

गी०भू०—एवं गुणबिबेकात् संसारमुक्त्वा तद्बिबेकान्मोक्ष-माह-नान्यमिति द्वाभ्याम् । द्रष्टा तत्त्वयाथात्म्यदर्शी जीबो यदा देहेन्द्रियात्मना परिणतेभ्यो गुणेभ्योऽन्यं कर्त्तारं नानु-पश्यति-गुणान् कर्त्तॄन् पश्यत्यात्मानं गुणेभ्यः परमकर्त्तारं वेत्ति, तदा स मद्भावमधिगच्छति । अयमाशयः-न खलु विज्ञा-नानन्दो बिशुद्धो जीबो युद्धयज्ञादिदुःखमयकर्म्मणां कर्त्ता, किन्तु गुणमयदेहेन्द्रियबानेब संस्तथेति गुणहेतुकत्वाद्गुणनिष्ठं तत्क-र्म्मकर्त्तृत्वं, न तु बिशुद्धात्मनिष्ठमिति यदानुपश्यति, तदा मद्भाव-मसंसारित्वं मत्परभक्तिं वा, लभत इति पुराप्येतद्भाषि. इह गुणहेतुकं कर्त्तृत्वं शुद्धस्य निषिद्धं, न तु शुद्धनिष्ठमिति, 'तस्य द्रष्टा' इत्यादिनोक्तम् ॥१९॥

गुणानेतानतीत्य त्रीन्देही देहसमुद्भवान् ।
जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥२०॥

सारा०ब०—ततश्च सोऽपि गुणातीत एबोच्यत इत्याह-गुणानिति ॥२०॥

गी०भू०—मद्भावपदेनोक्तमर्थं स्फुटयति-गुणानिति । देही देहमध्यस्थोऽपि जीबो गुणपुरुषबिबेक-बलेनैतान् देहसमुद्भबान् देहोत्पादकांस्त्रीन् गुणानतीत्योल्लङ्घ्य जन्मादिभिर्बिमुक्तोऽमृत-मात्मानमश्नुतेऽनुभवति । सोऽयमसंसारित्वलक्षणो मद्भावो मत्परभक्तिपात्रता-लक्षणो बा, एबं बक्ष्यति-'ब्रह्मभूतः प्रसन्नात्मा' इत्यादि ॥२०॥

अर्जुन उवाच—

कैर्लिङ्गैस्त्रीन्गुणानेतानतीतो भवति प्रभो ।
किमाचारः कथं चैतांस्त्रीन्गुणानतिवर्तते ॥२१॥

सारा०ब०—'स्थितप्रज्ञस्य का भाषा' इत्यादिना द्वितीयाध्याये पृष्टमप्यर्थं पुनस्ततोऽपि बिशेषवुभुत्सया पृच्छति—कैर्लिङ्गैः इत्येकः प्रश्नः, कैश्चिह्नैस्त्रिगुणातीतः स ज्ञेय इत्यर्थः; किमाचारः इति द्वितीयः, 'कथञ्चैतान्' इति तृतीयः, गुणातीतत्वप्राप्तेः किं साधनमित्यर्थः। स्थितप्रज्ञस्य का भाषा इत्यादौ स्थितप्रज्ञो गुणातीतः कथं स्यादिति तदानीं न पृष्टमिदानीं तु पृष्टमिति बिशेषः ॥ २१ ॥

गी०भू०—गुणातीतस्य लक्षणमाचारं च गुणात्ययसाधनञ्चार्जुनः पृच्छति—कैरित्यर्द्धकेन। प्रथमः प्रश्नः—कैश्चिह्नैर्गुणातीतो ज्ञातुं शक्य इत्यर्थः, किमाचार इति द्वितीयः—स किं यथेष्टाचारो नियताचारो वेत्यर्थः । कथं चैतानिति तृतीयः—केन साधनेन गुणानत्येतीत्यर्थः ॥२१॥

श्रीभगवानुवाच—

प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।
न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति ॥२२॥
उदासीनवदासीनो गुणैर्यो न विचाल्यते ।
गुणा वर्तन्त इत्येवं योऽवतिष्ठति नेङ्गते ॥२३॥
समदुःखसुखः स्वस्थः समलोष्ट्राश्मकाञ्चनः ।
तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥२४॥
मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।
सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥२५॥



सारा०ब०—तत्र कैर्लिङ्गैर्गुणातीतो भवतीति प्रथमप्रश्नस्योत्तरमाह—प्रकाशं सर्व्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायत इति सत्त्वकार्य्यम्, प्रवृत्तिश्च रजःकार्य्यम्, मोहश्च तमःकार्य्यम्—उपलक्षणमेतत् सत्त्वादीनाम, सर्व्वाण्यपि कार्य्याणि यथायथं संप्रवृत्तानि स्वतःप्राप्तानि दुःखबुद्ध्या यो न द्वेष्टि, गुणकार्य्याण्येतानि निवृत्तानि भवन्तीति सुखबुद्ध्या च यो न काङ्क्षति, स गुणातीत उच्यत इति चतुर्थेनान्वयः । संप्रवृत्तानीति क्लीबत्वमार्षम्। 'किमाचारः' इति द्वितीयप्रश्नस्योत्तरमाह—उदासीनवदिति त्रिभिः । गुणकार्य्यैः सुखदुःखादिभिर्यो न बिचाल्यते स्वरूपावस्थानान्न च्यवते अपि तु गुणा एव स्व-स्व-कार्य्येषु बर्त्तन्त इत्येवेति, एभिर्मम सम्बन्ध एव नास्तीति बिवेकज्ञानेन यस्तूष्णीमवतिष्ठति—परस्मैपदमार्षम्, नेङ्गते न कापि दैहिककृत्ये यतते। 'गुणातीतः स उच्यते' इति गुणातीतस्यैतानि चिह्नान्येतानाचारांश्च दृष्ट्वैव गुणातीतो बक्तव्यो न तु गुणातीतत्वोपपत्तिबावदूको गुणातीतो बक्तव्य इति भावः ॥ २२-२५ ॥

गी०भू०—यद्यपि 'स्थितप्रज्ञस्य का भाषा' इत्यादिना पृष्टमिदं 'प्रजहाति यदा कामान्' इत्यादिनोत्तरितञ्च, तथापि बिशेषजिज्ञासया पृच्छतीति विधान्तरेण तस्य लक्षणादीन्याह भगवान्—प्रकाशं चेत्यादि पञ्चभिः, तत्रैकेन लक्षणं स्वसंवेद्यमाह—प्रकाशं सत्त्वकार्य्यं, प्रवृत्तिं रजःकार्य्यं, मोहं तमः-कार्य्यम्, एतानि त्रीणि संप्रवृत्तान्युत्पादकसामग्रीबशात् प्राप्तानि दुःखरूपाण्यपि दुःखवुद्ध्या यो न द्वेष्टि, बिनाशकसामग्रीवशान्निवृत्तानि बिनष्टानि तानि सुखरूपाण्यपि सुखवुद्ध्या यो नाकाङ्क्षति, एतादृशद्वेषरागशून्यो गुणातीतः स उच्यत इति चतुर्थेनान्वयः। स्वगतौ द्वेषतदभावौ रागतदभावौ च परो न वेदितु-

मर्हतीति स्वसंवेद्यमिदं लक्षणम् । अथ परसम्वेद्यलक्षणं वक्तुं 'किमाचार:' इति द्वितीयप्रश्नस्योत्तारमाह-उदासीनेति त्रिभि: । उदासीनो मध्यस्थो यथा बिबादिनो: पक्षग्रहै: स्वमाध्यस्थ्यान्न बिचाल्यते, तथा सुखदु:खादिभावेन परिणतैर्गुणैर्यो नात्मा-बस्थितैर्बिचाल्यते, किन्तु गुणा: स्वकार्य्येषु प्रकाशादिषु बर्त्तन्ते, मम तैर्न सम्बन्ध इति निश्चित्य तूष्णीमवतिष्ठते, नेङ्गते गुण-कार्य्यानुरूपेण न चेष्टते, गुणातीत: स उच्यत इति तृतीयेना-न्वय: । किञ्च, समेति - यतोऽयं स्वस्थ: स्वरूपनिष्ठोऽतएब सम-दु:खसुख: समे अनात्मधर्म्मत्वात तुल्ये सुखदु:खे यस्य स:, समान्यनुपादेयतया तुल्यानि लोष्ट्रादीनि यस्य स:, लोष्ट्रमृत्पिण्ड-तुल्ये प्रियाप्रिये सुखदु:खसाधने बस्तुनी यस्य स:, धीर: प्रकृ-तिपुरुषबिवेककुशल:, तुल्ये निन्दात्मसंस्तुती यस्य स:-तत्प्रयोज-कयोर्दोषगुणयोरात्मगतत्वाभावादित्यर्थ: । य ईद्दशो, गुणातीत: स उच्यत इति द्वितीयेनान्वय: । मानेति स्फुटार्थ: । निन्दास्तुती बाग्व्यापारेण साध्ये, मानापमानौ तु कायमनोव्यापारेणापि स्यातामिति भेद: । सर्व्वेति-देहयात्रामात्रादन्यत् सर्व्वकर्म्म ग्राह्यम् । य ईद्दशो गुणातीत: 'उदासीनबत्' इत्याद्युक्ता यस्या-चारा: परैरपि संवेद्या:, स गुणातीतो बोध्यो न तु तदुपपत्ति-बाबदूक इति भाब: ॥२२-२५॥

**मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।**
**स गुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पते ॥२६॥**

सारा०ब०—'कथञ्चैतान् गुणानतिबर्त्तते' इति तृतीयप्रश्न-स्योत्तारमाह-माञ्चेति । 'च'-एबार्थे, मामेव श्यामसुन्दराकारं परमेश्वरं भक्तियोगेन य: सेवते, स एब ब्रह्मभूयाय ब्रह्मत्वाय ब्रह्मानुभबायेति याबत्, "भक्त्याहमेकया ग्राह्य:" इति मद्वाक्ये



एकयेति बिशेषणोपन्यासात् "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इत्यत्रापि एव-कार-प्रयोगात् भक्त्या बिना प्रकारा-न्तरेण ब्रह्मानुभवो न भवतीति निश्चयात् । भक्तियोगेन कीद्दशेन ? अव्यभिचारेण कर्म्मज्ञानाद्यमिश्रेण निष्कामकर्म्मणो न्यासश्रबणात् , "ज्ञानञ्च मयि संन्यसेत्" इति ज्ञानिनां चरम-दशायां ज्ञानस्यापि न्यासश्रबणात् , भक्तियोगस्य तु क्वापि न्यासाश्रबणात् भक्तियोग एब सोऽव्यभिचार: । तेन कर्म्मयोग-मिव ज्ञानयोगमपि परित्यज्य यद्यव्यभिचारेण केवलेनैब भक्ति-योगेन सेवते, तर्हि ज्ञानी अपि गुणातीतो भवति ; नान्यथा । अनन्यभक्तस्तु "निर्गुणो मद्पाश्रय:" इत्येकादशोक्तेर्गुणातीतो भवत्येब । अत्रेदं तत्त्वम् ,-"सात्त्विक: कारकोऽसङ्गी रागान्धो राजस: स्मृत: । तामस: स्मृतिबिभ्रष्टो निर्गुणो मद्पाश्रय: ॥" इत्यत्रासङ्गिन: कर्म्मिणो ज्ञानिनो वा सात्त्विकत्वेनैब साधक-त्वाबगतेस्तत्साहचर्य्यात् "निर्गुणो मद्पाश्रय" इति भक्त: साधक एबावगम्यते, ततश्च ज्ञानी ज्ञानसिद्ध: सन्नेव सात्त्विकत्वं परित्यज्य गुणातीतो भबति । भक्तस्तु साधकदशामारभ्यैव गुणातीतो भबतीत्यर्थो लभ्यते । "अत्र च-कारोऽवधारणार्थ:" इति स्वामिचरणा: । "मामेवेश्वरं नारायणमव्यभिचारेण भक्ति-योगेन द्वादशाध्यायोक्तेन य: सेबते" इति मधुसूदनसरस्वती-पादाश्च व्याचक्षते स्म ॥ २६ ॥

गी०भू०—कथं चैतांस्त्रीन् गुणानतिबर्त्तेत इति तृतीयप्रश्न-स्योत्तारमाह-माञ्चेति । चोऽवधारणे । 'नान्यं गुणेभ्य: कर्त्ता-रम्' इत्याद्युक्त्या यो गुणपुरुषबिवेकख्यातिमबाप, तयैव तस्या गुणात्ययो न संसिध्यति, किन्तु तद्वानपि यो मां कृष्णमेव माया-गुणास्पृष्टं माया-नियन्तारं नारायणादिरूपेण बहुधाबिभूतं चिदानन्दघनं सार्व्वज्ञ्यादि-गुणरत्नालयमव्यभिचारेणैकान्तिकेन

भक्तियोगेन सेवते भजति, स एतान् दुरत्ययानपि गुणानतीत्याक्रम्य ब्रह्मभूयाय कल्पते-गुणाष्टकाविशिष्टत्वाय निजधर्म्मीय योग्यो भवति, तं धर्म्मं लभत इत्यर्थः। जीवे ब्रह्मशब्दस्तूक्त एव प्राक्, तथा च भक्तिशिरष्कयैव तद्विवेकख्यात्या जीवस्य स्वरूपलाभो, न तु केवलया तयेत्युक्तम्। यत्तु ब्रह्मभूयाय इत्यनेन मद्रूपतां स यातीति पार्थसारथिनोपादिष्टमिति व्याचष्टे, तन्निरवधानमेव 'तेनैवेदं ज्ञानम्' इत्यादिना मोक्षेऽपि। स्वरूपभेदस्याभिहितत्वात् "निरञ्जनः परमं साम्यमुपैति" इत्यादिश्रुतिष्वपि तत्र तस्य दृष्टत्वादणुत्वविभुत्वादि-नित्यधर्म्मकृतत्वेन नित्यत्वाच्च तद्भेदस्य तस्माद्गुणाष्टकाविशिष्टत्वमेव "ब्रह्मैव सन् ब्रह्माप्येति" इति श्रुतौ तु ब्रह्मसदृशः सन् ब्रह्माप्येति प्राप्नोतीत्यर्थः-"एवौपम्येऽवधारणे" इति विश्वप्रकाशात्, "वा यथा तथैवेवं साम्ये" इत्यमरकोषाच्च, अन्यथा ब्रह्मभावोच्चारो ब्रह्माप्ययो न संगच्छेत ॥२६॥

ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥२७॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्व्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्ज्जुनसंवादे गुणत्रयविभागयोगो नाम चतुर्द्दशोऽध्यायः।



साराऽवः—ननु त्वद्भक्तानां कथं निर्गुणब्रह्मत्वप्राप्तिः, सा त्वद्वितीयतदेकानुभवेनैव सम्भवेत्तत्राह-ब्रह्मणो हीति। यस्मात् परमप्रतिष्ठात्वेन प्रसिद्धं यद्ब्रह्म तस्याप्यहं प्रतिष्ठा-प्रतिष्ठीयतेऽस्मिन्निति प्रतिष्ठा आश्रयोऽन्नमयादिषु श्रुतिषु सर्व्वत्रैव प्रतिष्ठा-पदस्य तथार्थत्वात्, तथामृतस्य प्रतिष्ठा, किं स्वर्गीय-



सुधायाः न अव्ययस्य नाशरहितस्य मोक्षस्येत्यर्थः, तथा शाश्वतस्य धर्म्मस्य साधनफलदशयोरपि नित्यस्थितस्य भक्त्याख्यस्य परमधर्म्मस्याहं प्रतिष्ठा, तथा तत्प्राप्यस्यैकान्तिकभक्तसम्बन्धिनः सुखस्य प्रेम्णश्चाहं प्रतिष्ठा, अतः सर्व्वस्यापि मदधीनत्वात् कैवल्यकामनया कृतेन मद्भजनेन ब्रह्मणि लीयमानो ब्रह्मत्वमपि प्राप्नोति। अत्र "ब्रह्मणोऽहं प्रतिष्ठा घनीभूतं ब्रह्मैवाहं यथा घनीभूतप्रकाश एव सूर्य्यमण्डलं तद्वदित्यर्थः" इति स्वामिचरणाः। सूर्य्यस्य तेजोरूपत्वेऽपि यथा तेजस आश्रयत्वमप्युच्यते, एवं मे कृष्णस्य ब्रह्मरूपत्वेऽपि ब्रह्मणः प्रतिष्ठात्वमपि। अत्र श्रीविष्णुपुराणमपि प्रमाणम्-"शुभाश्रयः स चित्तस्य सर्व्वगस्य तथात्मनः" इति, व्याख्यातञ्च तत्रापि स्वामिचरणैः-"सर्व्वगस्यात्मनः परः ब्रह्मणोऽप्याश्रयः प्रतिष्ठा, तदुक्तं भगवता "ब्रह्मणो हि प्रतिष्ठाहम्" इति। तथा विष्णुधर्म्मेऽपि नरकद्वादशीप्रसङ्गे-"प्रकृतौ पुरुषे चैव ब्रह्मण्यपि च स प्रभुः। यथैक एव पुरुषो वासुदेवो व्यवस्थितः॥" इति। तत्रैव मासर्क्षपूजाप्रसङ्गे-"यथाच्युतत्वं परतः परस्मात् स ब्रह्मभूतात् परतः परात्मा" इति। तथा हरिवंशेऽपि विप्रकुमारानयनप्रसङ्गे अर्ज्जुनं प्रति श्रीभगवद्वाक्यम् (विष्णुपर्व्वणि ११४ अः ११-१२) "तत्परं परमं ब्रह्म सर्व्वं विभजते जगत्। ममैव तद्घनं तेजो ज्ञातुमर्हसि भारत॥" इति। ब्रह्मसंहितायामपि-"यस्य प्रभा प्रभवतो जगदण्डकोटि-कोटिष्वशेषवसुधादिविभूतिभिन्नम्। तद्ब्रह्म निष्कलमनन्तमशेषभूतं, गोविन्दमादिपुरुषं तमहं भजामि॥" इति। अष्टमस्कन्धे-"मदीयं महिमानञ्च परं ब्रह्मेति शब्दितम्। वेत्स्यस्यनुगृहीतं मे संप्रश्नैर्विवृतं हृदि॥" इति भगवदुक्तिश्च। मधुसूदनसरस्वतीपादाश्च व्याचक्षते स्म यथा-"ननु त्वद्भक्तस्त्वद्भावमाप्नोतु नाम कथं ब्रह्मभावाय कल्पते ब्रह्मणः

सकाशात्तवान्यत्वादित्याशङ्क्याह–ब्रह्मणो हीति । प्रतिष्ठा पर्य्याप्तिरहमेवेति–पर्य्याप्तिः परिपूर्णता इत्यमरः । "पराकृतमनद्वन्द्वं परं ब्रह्म नराकृति । सौन्दर्य्य-सार-सर्व्वस्वं बन्दे नन्दात्मजं महः ॥" इत्युपश्लोकयामासुश्च ॥ २७ ॥

अनर्थ एव त्रैगुण्यं निस्त्रैगुण्यं कृतार्थता ।
तच्च भक्त्यैव भवतीत्यध्यायार्थो निरूपितः ॥ (२)
इति सारार्थवर्षिण्यां हर्षिण्यां भक्तचेतसाम् ।
चतुर्द्दशोऽयं गीतासु सङ्गतः सङ्गतः सताम् ॥ (३)

गी०भू०—ननु तद्विवेकख्यात्या त्वदेकभक्त्या च गुणातीतो लब्धस्वरूपो 'ब्रह्म'शब्दितो मुक्तः कथं तिष्ठेदिति चेत्तत्राह–ब्रह्मणो हीति । हिर्निश्चये । ब्रह्मणस्तत्पूर्व्वकया तया सत्त्वाद्यावरणात्ययादाविर्भावित-स्वगुणाष्टकस्यामृतस्य मृतिनिर्गतस्याव्ययस्य ताद्रूप्येणैकरसस्य मुक्तस्य मदतिप्रियस्याहमेव विज्ञानानन्दमूर्त्तिरनन्तगुणो निरवद्यः सुहृत्तमः सर्व्वेश्वरः प्रतिष्ठा–'प्रतिष्ठीयतेऽत्र' इति निरुक्तेः परमाश्रयोऽतिप्रियो भवामीति तादृशं मां परया भक्त्यानुभवंस्तिष्ठतीति, न मत्तो विश्लेषलेशो, "न च पुनरावर्त्तते", "यद्गत्वा न निवर्त्तन्ते", "मुक्तानां परमा गतिः" इति स्मृतिभ्यः । ननु मुक्तस्त्वां कथं श्रयेत् श्रयणफलस्य मुक्तेर्लाभादिति चेदस्त्यतिशयितं फलमिति भावेनाह–शाश्वतस्य चेत्यादि । नित्यस्य षड़ैश्वर्य्यशब्दितस्य धर्म्मस्यैकान्तिकस्य मदसाधारणस्य सुखस्य च विचित्रलीला-रसस्याहमेव प्रतिष्ठेति । तीव्रानन्दरूप-तद्विभूतिमल्लीलानुभवाय मामेव समाश्रयतीत्येवमाह श्रुतिः "रसो वै सः, रसं ह्येवायं लब्ध्वानन्दी भवति" इति ॥२७॥

संसारो गुणयोगः स्याद्विमोक्षस्तु गुणात्ययः ।
तत्सिद्धिर्हरिभक्त्यैवेत्येतद्बुद्धं चतुर्द्दशात् ॥

इति श्रीमद्भगवद्गीतोपनिषद्भाष्ये चतुर्द्दशोऽध्यायः ।

# पञ्चदशोऽध्यायः

श्रीभगवानुवाच—

ऊर्द्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥१॥

सारा०व०—संसारच्छेदकोऽसङ्ग आत्मेशांशः क्षराक्षरात् ।
उत्तमः पुरुषः कृष्ण इति पञ्चदशे कथा ॥ (१)

पूर्व्वाध्याये "माञ्च योऽव्यभिचारेण भक्तियोगेन सेवते । स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥" इत्युक्तम् । तत्र तव मनुष्यस्य भक्तियोगेन कथं ब्रह्मभाव इति चेत् सत्यमहं मनुष्य एव किन्तु ब्रह्मणोऽपि तस्य प्रतिष्ठा परमाश्रय इत्यस्य सूत्ररूपस्य वृत्तिस्थानीयोऽयं पञ्चदशाध्याय आरभ्यते, तत्र स गुणान् समतीत्य इत्युक्तमिति गुणमयोऽयं संसारः कः कुतो वायं प्रवृत्तास्तद्भक्त्या संसारमतिक्राम्यन् जीवो वा कः ब्रह्मभूयाय कल्पत इत्युक्तं ब्रह्म वा किं ब्रह्मणः प्रतिष्ठा त्वं वा क इत्याद्यपेक्षायां प्रथममतिशयोक्त्यलङ्कारेण संसारोऽयमद्भुतोऽश्वत्थवृक्ष इति वर्णयति–उद्ध्वे मर्त्यलोकोपरितले सत्यलोके प्रकृतिबीजोत्थ--प्रथम--प्ररोहरूप-महत्--तत्त्वात्मकश्चतुर्म्मुख एक एव मूलं यस्य तम्, अधः-स्वर्भुवोभूर्लोकेष्वनन्ता देवगन्धर्व्वकिन्नरासुरराक्षसप्रेतभूतमनुष्यगवाश्वादिपशुपक्षि–कृमिकीट–पतङ्गस्थावरान्ताः शाखा यस्य तमश्वत्थं धर्म्मादिचतुर्व्वर्गसाधकत्वादश्वत्थमुत्तमं वृक्षम्, श्लेषेण–भक्तिमतां न श्वः स्थास्यतीत्यश्वत्थं नष्टप्रायमित्यर्थोऽभक्तानां त्वव्ययमनश्वरम् । छन्दांसि "वायव्यं श्वेतमालभेत, भूमिकाम ऐन्द्रमेकादशकपालं निर्व्वपेत्

प्रजाकामः" इत्याद्याः कर्म्मप्रतिपादका वेदाः संसारबर्द्धकत्वात् पर्णानि,-वृक्षो हि पर्णैः शोभते यस्तं जानाति, स वेदज्ञः। तथा च उद्ध्र्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः इति कठवल्लीश्रुतिः ॥ १ ॥

गी०भू०—संसारच्छेदि वैराग्यं जीवो मेऽंशः सनातनः।
अहं सर्व्वोत्तमः श्रीमानिति पञ्चदशे स्मृतम् ॥

पूर्व्वत्र बिज्ञानानन्दस्यौत्पत्तिकगुणाष्टकस्यापि जीवस्य कर्म्म-रूपानादिवासनानुगुणेन भगवत्संकल्पेन प्रकृतिगुणसङ्गः। स च बहुबिधस्तदत्ययश्च भगवद्भक्तिशिरष्केन बिवेकज्ञानेन भवेत्तस्मिंश्च सति संप्राप्तनिजस्वरूपो जीवो भगबन्तमाश्रित्य प्रमोदो सर्व्वदा तस्मिंस्तिष्ठतीत्युक्तम्। अथ तद्बिवेकज्ञानस्थैर्य्यकरं वैराग्यं जीवस्य भजनीयभगवदंशत्वं भगवतः स्वेतर-सर्व्वोत्तमत्वं चोक्तेष्वर्थेषूपयोगाय पञ्चदशेऽस्मिन् बर्ण्यते। तत्र तावद्गुणबिरचितस्य संसारस्य वैराग्यवैच्छेद्यत्वात् संसारं वृक्षत्वेन वैराग्यञ्च शस्त्रत्वेन रूपयन् बर्णयति भगवान्—ऊद्ध्र्वमूलमित्यादिभिस्त्रिभिः, संसार-रूपमश्वत्थमूद्ध्र्वमूलमधःशाखं प्राहुः—ऊद्ध्र्वं सर्व्वोपरिसत्यलोके 'प्रधान'-बीजोत्थ-प्रथमप्ररोहरूप-महत्तत्त्वात्मक-चतुर्म्मुखरूपं मूलं यस्य तम्, अधः सत्यलोकादर्व्वाचीनेषु स्वर्भूबर्भूर्लोकेषु देव-गन्धर्व्व-किन्नरासुर-यक्षराक्षस-मनुष्य--पशु-पक्षि--कीट-पतङ्ग-स्थाबरान्ता नानादिक्प्रसृतत्वाच्छाखा यस्य तम्; चतुर्व्वर्गफलाश्रयत्वादश्वत्थमुत्तमवृक्षम्। तादृशेन बिवेकज्ञानेन बिना निवृत्तेरभावादव्ययं प्रबाहरूपेण नित्यञ्च; तमाहुः श्रुतयस्ताश्च—"ऊद्ध्र्वमूलोऽर्व्वाक्शाख एषोऽश्वत्थः सनातनः। ऊद्ध्र्वमूलमर्व्वाक्शाखं वृक्षं यो वेद सम्प्रति॥" इत्यादिकाः। यस्य संसाराश्वत्थस्य छन्दांसि काम्यकर्म्मप्रतिपादकानि श्रुतिबाक्यानि बासनारूप-तन्निदानवर्द्धकत्वात् पर्णानि प्राहुस्तानि च्छन्दांसि--



"वायव्यं श्वेतमालभेत, भूतिकाम ऐन्द्रमेकादशकपालं निर्व्वपेत प्रजाकामः" इत्यादीनि बोध्यानि; पत्रैस्तरुर्वर्द्धते शोभते च तमश्वत्थं यो वेद यथोक्तं जानाति, स एव वेदवित्; वेदः खलु संसारस्य वृक्षत्वं छेद्यत्वाभिप्रायेणाह-तच्छेदनोपायज्ञो वेदार्थ-बिदिति भावः ॥१॥

**अधश्चोर्ध्वं प्रसृतास्तस्य शाखा गुणप्रवृद्धा विषयप्रवालाः।**
**अधश्च मूलान्यनुसंततानि कर्मानुबन्धीनि मनुष्यलोके ॥२॥**

मारा०ब०—अधः पश्वादियोनिषु ऊद्ध्र्वं देवादियोनिषु प्रसृतास्तस्य संसारवृक्षस्य शाखा, गुणैः सत्वादिवृत्तिभिर्जलसेकैरिव प्रवृद्धा, बिषयाः शब्दादयः प्रबालाः पल्लवस्थानीया यासां ताः। किञ्च तस्य मूले सर्व्वलोकैरलक्षितो महानिधिः कश्चिदस्तीत्यनुमीयते यमेव मूलजटाभिरवलम्ब्य स्थितस्य तस्याश्वत्थवृक्षस्यापि बटवृक्षस्येव शाखास्वपि बाह्या जटाः सन्तीत्याह-अधश्चेति। ब्रह्मलोकमूलस्यापि तस्याधश्च मनुष्यलोके कर्म्मानुबन्धिनी कर्म्मानुलम्बीनि मूलान्यनुसन्ततानि निरन्तरं बिस्तृतानि भवन्ति। कर्म्मफलानां यतस्ततो भोगान्ते पुनर्मनुष्यजन्मन्येव कर्म्मसु प्रवृत्तानि भवन्तीत्यर्थः ॥ २ ॥

गी०भू०—किञ्चाध इति। तस्योक्तलक्षणस्य संसाराश्वत्थस्य शाखा अध ऊद्ध्र्वं च प्रसृताः; अधो मनुष्यपश्वादियोनिषु दुष्कृतैरूद्ध्र्वञ्च देवगन्धर्व्वादियोनिषु सुकृतैर्बिस्तृताः; गुणैः सत्त्वादिवृत्तिभिरम्बुनिषेकैरिव प्रवृद्धाः स्थौल्यभाजः; बिषयाः शब्दस्पर्शादयः प्रबालाः पल्लवा यासां ताः, शाखाग्र-स्थानीयाभिः श्रोत्रादिवृत्तिभिर्योगाद्रागाधिष्ठानत्वाच्च शब्दादीनां पल्लवस्थानीयत्वं, तस्याश्वत्थस्याधश्चशब्दादूद्ध्र्वं चाबान्तराणि मूलान्यनुसन्ततानि बिस्तृतानि सन्ति, तानि च तत्तद्भोगजनितरागद्वेषा-

दिवासनारूपाणि धर्म्माधर्म्मप्रवृत्तिकारित्वान्मूलतुल्यान्युच्यन्ते ; मुख्यं मूलं तादृक् चतुर्म्मुखस्तत्तद्वासनास्त्ववान्तरमूलानि न्यग्रोधस्यैव जटोपजटावृन्दानीति भावः । तानि कीदृशानीत्याह—मनुष्यलोके कर्म्मानुबन्धीनि यतस्ततः कर्म्मफलभोगावसाने सति पुनर्मनुष्यलोके कर्म्महेतुभूतानि भवन्तीत्यर्थः ; स लोकः खलु कर्म्मभूमिरिति प्रसिद्धम् ॥२॥

**न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च संप्रतिष्ठा ।**
**अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्त्वा ॥३॥**
**ततः पदं तत्परिमार्गितव्यं यस्मिन्गता न निवर्तन्ति भूयः ।**
**तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी ॥४॥**

सारा०ब०—किञ्चेह मनुष्यलोकेऽस्य रूपं स्वरूपं तथा सनिश्चयं नोपलभ्यते—सत्योऽयं मिथ्यायं नित्योऽयमिति वादिमतवैविध्यादिति भावः । न चान्तोऽवसानोऽपर्य्यन्तत्वान्न चादिरनादित्वान्न च संप्रतिष्ठाश्रयः, किमाधारः कोऽयमित्यपि नोपलभ्यते तत्त्वज्ञानाभावादिति भावः । यथा तथायं भवतु जीवमात्रदुःखैकनिदानस्यास्य छेदकं शस्त्रमसङ्गं ज्ञात्वा तेनैनं छित्त्वैवास्य मूलतलस्थो महानिधिरन्वेष्टव्य इत्याह—अश्वत्थमिति । असङ्गोऽत्रानासक्तिः सर्व्वत्रवैराग्यमिति यावत् तेन शस्त्रेण कुठारेण छित्त्वा स्वतः पृथक्कृत्य ततस्तस्य मूलभूतं तत्पदं वस्तु महानिधिरूपं ब्रह्म परिमार्गितव्यमन्वेष्टव्यम ; कीदृशं तदत आह—यस्मिन् गता यत् पदं प्राप्ताः सन्तो भूयो न निवर्त्तन्ते न चावर्त्तन्त इत्यर्थः । अन्वेषणप्रकारमाह—यत एषा पुराणी चिरन्तनी संसारप्रवृत्तिः प्रसृता विस्तृता तमेवाद्यं पुरुषं प्रपद्ये भजामीति भक्त्यान्वेष्टव्यमित्यर्थः ॥ ३-४ ॥



गी०भू०—न रूपमिति—अस्याश्वत्थस्य रूपमिह मनुष्यलोके तथा नोपलभ्यते, यथोर्द्ध्वमूलत्वादिधर्म्मकतया मयोपवर्णितम ; न चास्यान्तो नाश उपलभ्यते—कथमयमनर्थव्रातजटिलो विनश्येदिति न ज्ञायते, न चास्यादिकारणमुपलभ्यते—कुतोऽयमीदृशो जातोऽस्तीति, न चास्य संप्रतिष्ठा समाश्रयोऽप्युपलभ्यते—किं समाश्रित्योऽयं संतिष्ठत इति । किन्तु 'मनुष्योऽहं पुत्रो यज्ञदत्तस्य, पिता च देवदत्तस्य, तदनुरूपकर्म्मकारी सुखी दुःखी, चास्मिन् देशेऽस्मिन् ग्रामे निवसामि' इत्येतावदेव विज्ञायत इत्यर्थः । यस्मादेवं दुर्व्वोधोऽनर्थव्रते हेतुश्चायमश्वत्थस्तस्मात् सत्प्रसङ्गलब्धवस्तुयाथात्म्यज्ञानेनैनमसङ्गशस्त्रेण वैराग्यकुठारेण दृढेन विवेकाभ्यासनिशितेन छित्त्वा स्वतः पृथक्कृत्य तत्पदं परिमार्गितव्यमिति परेणान्वयः । सङ्गो विषयाभिलाषस्तद्विरोध्यसङ्गो वैराग्यं, तदेव शस्त्रं तदभिलाषनाशकत्वात् सुविरूढमूलं पूर्व्वोक्तरीत्यात्यन्तं बद्धमूलम । ततः संसाराश्वत्थमूलादुपरि स्थितं तत्पदं परिमार्गितव्यं—सत्प्रसङ्गलब्धैः श्रवणादिभिः साधनैरन्वेष्टव्यम । तत्पदं कीदृशम ? तत्राह—यस्मिन्निति । यस्मिन् गतास्तैः साधनैर्यत प्राप्ता जनास्ततो न निवर्त्तन्ते—स्वर्गादिव न पतन्ति । मार्गणावधिमाह—तमेवेति । यतः पुराणी चिरन्तनीयं जगत्प्रवृत्तिः प्रसृता विस्तृता, तमेव चाद्यं सर्व्वकारणं पुरुषं प्रपद्ये शरणं व्रजामीति प्रपत्तिपूर्व्वकैः श्रवणादिभिस्तन्मार्गणमुक्तम् । यो जगद्धेतुर्यत्प्रपत्त्या संसारनिवृत्तिः, स खलु कृष्ण एव—'अहं सर्व्वस्य प्रभवः' इत्यादेः, 'दैवी ह्येषा गुणमयी' इत्यादेश्च तदुक्तेः, 'न तद्भासयते' इत्यादिना व्यक्तीभावित्वाच्च ॥३-४॥

**निर्मानमोहा जितसङ्गदोषा अध्यात्मनित्या विनिवृत्तकामाः ।**
**द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैर्गच्छन्त्यमूढाः पदमव्ययं तत् ॥५**

सारा०ब०—तद्भक्तौ सत्यां जनाः कीदृशा भूत्वा तत्पदं प्राप्नुवन्तीत्यपेक्षायामाह-निर्म्मानेति । अध्यात्मनित्या अध्यात्मबिचारो नित्यो नित्यकर्त्तव्यो येषां ते परमात्मालोचनतत्पराः ॥५॥

गी०भू०—तत्प्रपत्तौ सत्यां कीदृशाः सन्तस्तत्पदं प्राप्नुवन्तीत्याह-निर्म्मानेति । मानः सत्कारजन्यो गर्व्वः, मोहो मिथ्याभिनिवेशस्ताभ्यां निर्गताः, जितः सङ्गदोषः प्रियभार्य्यादिस्नेहलक्षणो यैस्ते, अध्यात्मं स्वपरात्मविषयको बिमर्शः स नित्यो नित्यकर्त्तव्यो येषां ते, सुखादिहेतुत्वात्तत्संज्ञैर्द्वन्द्वैः शीतोष्णादिभिर्विमुक्तास्तत्सहिष्णवः, अमूढाः-प्रपत्तिविधिज्ञाः ॥५॥

न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥६॥

सारा०ब०—तत्पदमेब कीदृशमित्यपेक्षायामाह-न तदिति । औष्ण्यशैत्यादिदुःखरहितं तत् स्वप्रकाशमिति भावः । तन्मम परमं धाम सर्व्वोत्कृष्टमजड़मतीन्द्रियं तेजः सर्व्वप्रकाशम् ; यदुक्तं हरिवंशे-"तत् परं परमं ब्रह्म सर्व्वं बिभजते जगत् । ममेव तद्घनं तेजो ज्ञातुमर्हसि भारत ॥" इति ; न तत्र सूर्य्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्व्वं तस्य भासा सर्व्वमिदं बिभाति ॥" इति श्रुतिभ्यश्च ॥ ६ ॥

गी०भू०—गन्तव्यं पदं विशिषन् परिचाययति-न तदिति । प्रपन्ना यद्गत्वा यतो न निवर्त्तन्ते, तन्ममैव धाम स्वरूपं परमं श्रीमत् । सर्व्वावभासका अपि सूर्य्यादयस्तन्न भासयन्ति प्रकाशयन्ति-"न तत्र सूर्य्यो भाति" इत्यादिश्रुतेश्च, सूर्य्यादिभिरप्रकाश्यस्तेषां प्रकाशकः स्वप्रकाशक-श्चिद्विग्रहो लक्ष्मीपतिरहमेव पद-शब्दबोध्यः प्रपन्नैर्लभ्य इत्यर्थः ॥६॥



ममैवांशो जीवलोके जीवभूतः सनातनः ।
मनः षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥७॥

सारा०ब०—त्वद्भक्त्या संसारमतिक्राम्यन् तत्पदगामी जीवः क इत्यपेक्षायामाह-ममैवांश इति । यदुक्तं बाराहे-"स्वांशश्चाथ बिभिन्नांश इति द्वेधायमिष्यते । बिभिन्नांशस्तु जीवः स्यात्" इति । सनातनो नित्यः स च बन्धदशायां मन एब षष्ठं येषां तानीन्द्रियाणि प्रकृतावुपाधौ स्थितानि कर्षति, ममैवैतानीति स्वीयत्वाभिमानेन गृहीतां पादार्गलश्रृङ्खलामिव कर्षति ॥७॥

गी०भू०—ननु त्वत्प्रपत्त्या यस्तत्पदं याति, स जीवः क इत्यपेक्षायामाह-ममैवेति । जीवः सर्व्वेश्वरस्य ममैवांशो, न तु ब्रह्मरुद्रादेरीश्वरस्य, स च सनातनो नित्यो, न तु घटाकाशादिवत् कल्पितः, स च जीवलोके प्रपञ्चे स्थितो मनःषष्ठानीन्द्रियाणि श्रोत्रादीनि कर्षति-पादादिश्रृङ्खला इव बहति, तानि कीदृशीत्याह-प्रकृतिस्थानि प्रकृतिबिकारभूताहङ्कारकार्य्याणीत्यर्थः । तत्र मनः सात्त्विकाहङ्कारस्य, श्रोत्रादिकं तु राजसाहङ्कारस्य कार्य्यमिति बोध्यम् । भगबत्प्रपत्त्या प्राकृतकरणहीनो भगवल्लोकं गतस्तु भागवतैर्देहकरणैर्विभूषणैरिव बिशिष्टो भगबन्तं संश्रयन् निवसतीति सूच्यते-"स वा एष ब्रह्मनिष्ठ इदं शरीरं मर्त्यमतिसृज्य ब्रह्माभिसंपद्य ब्रह्मणा पश्यति ब्रह्मणा श्रृणोति ब्रह्मणैवेदं सर्व्वमनुभवति" इति माध्यन्दिनायनश्रुतेः, "बसन्ति यत्र पुरुषाः सर्व्वे वैकुण्ठमूर्त्तयः" इत्यादि स्मृतेश्च, भगबत्संकल्प-सिद्धचिद्विग्रहस्तत्र भवतीति । यत्तु घटाकाशवज्जलाकाशवद्वा जीवे ब्रह्मणोऽंशोऽन्तःकरणेनावच्छेदात्तस्मिन् प्रतिबिम्बनाशाद्वा घटजलनाशे तत्तदाकाशस्य शुद्धाकाशत्ववदन्तःकरणनाशे जीवांशस्य शुद्धब्रह्मत्वमिति बदन्ति, न तत्सारम्-'जीवभूतः' 'ममांशः' 'सना-

तनः' इत्युक्तिव्याकोपात्, परिच्छेदादिवादद्वयस्य 'देहिनोऽस्मिन् यथा" इत्यत्र प्रत्याख्यानाच्च, प्रति विम्बसादृश्यात्तु तत्त्वं मन्तव्यमम्बुवदधिकरणविनिर्णयात् । तस्मात्, ब्रह्मोपसर्ज्जनत्वं जीवस्य ब्रह्मांशत्वं बिधुमण्डलस्य शतांशः शुक्रमण्डलमित्यादौ दृष्टं चेदमेकवस्त्वेकदेशत्वं चांशत्वमाहुः। ब्रह्म खलु शक्तिमदेकं वस्तु, ब्रह्मशक्तिः-'इतस्त्वन्यां प्रकृतिं बिद्धि मे परां जीवभूताम्' इति पूर्व्वोक्तेरतस्तदेकदेशात्तदंशो जीवः ॥७॥

शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥८॥

सारा०ब०—तान्याकृष्य किं करोतीत्यपेक्षायामाह-शरीरमिति। यत् स्थूलशरीरं कर्म्मबशादबाप्नोति, यच्च यस्माच्च शरीरादुत्क्रामति निष्क्रामति, ईश्वरो देहेन्द्रियादिस्वामी जीवः, तस्मात्तत्र एतानीन्द्रियाणि भूतसूक्ष्मैः सह गृहीत्वैव संयाति बायुर्गन्धानिवेति बायुर्यथाशयाद्गन्धाश्रयात् स्रक्चन्दनादेः सकाशात् सूक्ष्माबयवैः सह गन्धान् गृहीत्वान्यत्र याति तद्वदित्यर्थः ॥ ८ ॥

गी०भू०—जीवलोके स्थित इन्द्रियाणि कर्षति इत्युक्तम्; तत् प्रतिपादयति-शरीरमिति। ईश्वरः शरीरेन्द्रियाणां स्वामी जीवो यद्यदा पूर्व्वशरीरादन्यच्छरीरमबाप्नोति, यदा चाप्नाच्छरीरादुत्क्रामति, तदैतानीन्द्रियाणि भूतसूक्ष्मैः सह गृहीत्वा यात्याशयात् पुष्पकोशाद्गन्धान् गृहीत्वा बायुरिव स यथान्यत्र याति, तद्वत् ॥८॥

श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।
अधिष्ठाय मनश्चायं विषयानुपसेवते ॥९॥



सारा०ब०—तत्र गत्वा किं करोतीत्यत आह-श्रोत्रमिति। श्रोत्रादीनीन्द्रियाणि मनश्चाधिष्ठायाश्रित्य विषयान् शब्दादीनुपभुङ्क्ते ॥ ९ ॥

गी०भू०—तानि गृहीत्वा किमर्थं याति ? तत्राह-श्रोत्रमिति। श्रोत्रादीनि समनस्कान्यधिष्ठायाश्रित्यायं जीवो विषयान् शब्दादीनुपभुङ्क्ते-तदर्थं तद्ग्रहणमित्यर्थः। च-शब्दात् कर्म्मेन्द्रियाणि च पञ्च प्राणांश्चाधिष्ठायेत्यवगम्यम् ॥९॥

उत्क्रामन्तं स्थितं वापि भुञ्जानं वा गुणान्वितम् ।
विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥१०॥

सारा०ब०—ननु यस्मात् देहान्निष्क्रामति यस्मिन् देहे बा तिष्ठति तत्र स्थित्वा वा यथा भोगान् भुङ्क्त इत्येवं बिशेषं नोपलभामहे ? तत्राह-उत्क्रामन्तं देहान्निष्क्रामन्तम्, स्थितं देहान्तरे वर्त्तमानञ्च बिषयान् भुञ्जानञ्च गुणान्वितमिन्द्रियादिसहितं बिमूढा अविवेकिनः ज्ञानचक्षुषो विवेकिनः ॥ १० ॥

गी०भू०—एवं शरीरस्थत्वेनानुभवयोग्यमविवेकिनस्तमात्मानं नानुभवन्तीत्याह-उदिति। शरीरादुत्क्रामन्तं तत्रैव स्थितं वा स्थित्वा विषयान् भुञ्जानं वा गुणान्वितं सुखदुःखमोहैरिन्द्रियादिभिर्व्वान्वितं युक्तमनुभबयोग्यमप्यात्मानं बिमूढाश्चिरन्तनबासनाकृष्टचित्ततया विवेकायोग्या नानुपश्यन्ति नानुभवन्ति। ज्ञानचक्षुषो बिबेकज्ञाननेत्रास्तु तं पश्यन्ति-शरीरादिबिबिक्तमनुभवन्ति ॥१०॥

यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।
यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥११॥

सारा०ब०—ते च विवेकिनो यतमाना योगिन एवेत्याह-

यतन्त इति। अकृतात्मानोऽशुद्धचित्ताः ॥ ११ ॥

गी०भू०—'ज्ञानचक्षुषः पश्यन्ति' इत्येतद्विवृन्वन् दुर्ज्ञानतां तस्याह–यतन्त इति। केचिद्योगिनो यतमानाः श्रवणाद्युपाया-ननुतिष्ठन्त आत्मनि शरीरेऽवस्थितमेनमात्मानं पश्यन्ति, केचि-द्यतमाना अप्यकृतात्मानोऽनिर्म्मलचित्ता अतोऽवचेतसोऽनु-दितविवेकज्ञाना एनं न पश्यन्तीति दुर्ज्ञेयमात्मतत्त्वमित्यर्थः ॥११॥

यदादित्यगतं तेजो जगद्भासयतेऽखिलम्।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥१२॥

सारा०ब०—तदेवं जीवस्य बद्धावस्थायां यत् यत् प्राप्य-वस्तु तत्राहमेव सूर्य्यचन्द्राद्यात्मकः सन्नुपकरोमीत्याह–यदिति त्रिभिः। आदित्यस्थितं तेज एवोदयपर्व्वते प्रातरुदित्य जीवस्य दृष्टादृष्टभोगसाधनकर्म्मप्रवर्त्तनार्थं जगद्भासयत एवञ्च यच्चन्द्रमसि अग्नौ च तत्तदखिलं मामकमेव सूर्य्यादिसंज्ञोऽहमेव भवा-मीत्यर्थः। मत्तेजस एव तत्तद्विभूतिरिति भावः ॥ १२ ॥

गी०भू०—अथ मदंशस्य जीवस्य संसाररक्तस्य मुमुक्षोश्च भोगमोक्षसाधनमहमेवेति भावेनाह–यदिति चतुर्भिः। आदित्ये स्थितं यत्तेजो यच्चन्द्रेऽग्नौ च स्थितं सत् सर्व्वं जगत् प्रकाशयति, तत्तेजो मामकं मदीयं विद्धि–उदितेन सूर्य्येण ज्वलितेन च वह्निनादृष्टभोगसाधनानि कर्म्माणि निष्पद्यन्ते, तिमिरजाड्यना-शादयश्च सुखहेतवो भवन्ति। उदितेन चन्द्रेण चौषधिपोषता-पशान्ति–ज्योत्स्नाविहारास्तथाभूता भवन्तीति तेषां तत्तत्साधकं तेजो मत्तेजोविभूतिरित्यर्थः ॥१२॥

गामाविश्य च भूतानि धारयाम्यहमोजसा।
पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥१३॥



सारा०ब०—गां पृथ्वी ओजसा स्वशक्त्या आविश्य अधिष्ठाय अहमेव चराचराणि भूतानि धारयामि तथाहमेवा-मृतरसमयः सोमो भूत्वा व्रीह्याद्योषधीः संबर्द्धयामि ॥ १३ ॥

गी०भू०—गामिति। पांशुमुष्टितुल्यां गां पृथिवीमोजसा स्व-शक्त्याऽऽविश्य दृढीकृत्य भूतानि स्थिरचराणि धारयामि, मन्त्र-वर्णश्चैवमाह–"येन द्यौरुग्रा पृथिवी च दृढा इति, अन्यथासौ सिकतामुष्टिवद्विशीर्य्येत निमज्जेद्वेति भावः। तथाहमेव रसा-त्मकः सोमोऽमृतमयश्चन्द्रो भूत्वा सर्व्वा ओषधीर्निखिला व्रीह्याद्याः पुष्णामि–स्वादुविविधरसपूर्णाः करोमि। तथा च भूमिलोके स्थि-तस्य जीवस्य विविध-प्रासाद-–वाटिका-–तडागादि-क्रीडास्थानानि निर्म्माय नानारसान् भुञ्जानस्य तत्तत्साधनमहमेवेति ॥१३॥

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥१४॥

सारा०ब०—वैश्वानरो जठरानलः प्राणापानाभ्यां तदुद्दीप-काभ्यां सहितः चतुर्व्विधं भक्ष्यं भोज्यं लेह्यं चूष्यम्–भक्ष्यं दन्तच्छेद्यं भ्रष्टचणकादि, भोज्यं ओदनादि, लेह्यं गुडादि, चूष्यम् इक्षुदण्डादि ॥ १४ ॥

गी०भू०—भोग्यानामन्नादीनां पाकहेतुश्चाहमेवेत्याह–अह-मिति। वैश्वानरो जठराग्निस्तच्छरीरको भूत्वा प्राणिनां सर्व्वेषां देहमुदरमाश्रितः प्राणापानाभ्यां तदुद्दीपकाभ्यां समायुक्तश्च सन्नहं तैर्भुक्तं चतुर्व्विधमन्नं पचामि पाकं नयामि, श्रुतिश्चैवमाह–"अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदं अन्नं पच्यते" इत्यादिना, तथा चाहमेव जाठराग्निशरीरस्तदुपकारीत्येवमाह सूत्रकारः, "शब्दादिभ्योऽन्तः प्रतिष्ठानाच्च" इत्यादिना। अन्यस्य चातुर्व्विध्यं च–भक्ष्यं, भोज्यं, लेह्यं, चूष्यञ्चेति भेदात्–दन्त-

च्छेद्यं चणकपूपादि भक्ष्यं चर्व्यमिति चोच्यते, मोदकौदनसूपादि भोज्यं, पायसगुड़मध्वादि लेह्यं, पक्काम्रेक्षुदण्डादि चूष्यं, सोमवैश्वानरयोः स्वाभेदेनोक्तिः स्वव्याप्यत्वादिति बोध्यम् ॥१४॥

सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च ।
वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ॥१५॥

सारा०ब०—यथैव जठरे जठराग्निरहं तथैव सर्व्वस्य चराचरस्य हृदि सन्निविष्टो बुद्धितत्त्वरूपोऽहमेव यतः मत्तो बुद्धितत्त्वादेव पूर्व्वानुभूतार्थविषयानुस्मृतिर्भवति, तथा विषयेन्द्रिययोगजं ज्ञानञ्च अपोहनं स्मृतिज्ञानयोरपगमश्च भवतीति । जीवस्य बन्धावस्थायां स्वस्योपकारकत्वमुक्त्वा मोक्षावस्थायां यत्प्राप्यं तत्राप्युपकारकत्वमाह-वेदैरिति । वेदव्यासद्वारा वेदान्तकृदहमेव यतो वेदविद् वेदार्थतत्त्वज्ञोऽहमेव-मत्तोऽन्यो वेदार्थं न जानातीत्यर्थः ॥ १५ ॥

गी०भू०—प्राणिनां ज्ञानाज्ञानहेतुश्चाहमेवेत्याह-सर्व्वस्य चेति । तयोः सोमवैश्वानरयो सर्व्वस्य च प्राणिवृन्दस्य हृदि निखिलप्रवृत्तिहेतु-ज्ञानोदयदेहेऽहमेव नियामकत्वेन सन्निविष्टः-"अन्तःप्रविष्टः शास्ता जनानाम्"इत्यादिश्रवणात् । अतो मत्त एव सर्व्वस्य स्मृतिः पूर्व्वानुभूतवस्तुविषयानुसन्धिज्ञानञ्च विषयेन्द्रियसन्निकर्षजन्यं जायते, तयोरपोहनं प्रमोषश्च मत्तो भवति । एवमुक्तं उद्धवेन-"त्वत्तो ज्ञानं हि जीवानां प्रमोषस्तत्र शक्तितः" इति । एवं सांसारिकभोगसाधनतां स्वस्योक्त्वा मोक्षसाधनतामाह-वेदैश्चेति । सर्व्वैर्निखिलैर्वेदैरहमेव सर्व्वेश्वरः सर्व्वशक्तिमान् कृष्णो वेद्यः, "योऽसौ सर्व्वैर्वेदैर्गीयते" इति श्रुतेः, अत्र कर्म्मकाण्डेन परम्परया ज्ञानकाण्डेन तु साक्षादिति बोध्यम् । कथमेवं प्रत्येतव्यमिति चेत्तत्राह वेदान्तकृदहमेवेति । वेदानामन्तो-



ऽर्थनिर्णयस्तत्कृदहमेव बादरायणात्मना । एवमाह सूत्रकारः-"तत्तु समन्वयात्" इत्यादिभिः । नन्वन्ये वेदार्थमन्यथा व्याचक्षते ? तत्राह-वेदविदेव चाहमित्यहमेव वेदविदिति, बादरायणः सन् यमर्थमहं निरणैषं, स एव वेदार्थस्ततोऽन्यथा तु भ्रान्तिविजृम्भित इति, तथा च मोक्षप्रदस्य सर्व्वेश्वरतत्त्वस्य वेदैरबोधनादहमेव मोक्षसाधनमिति ॥१५॥

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥१६॥

सारा०ब०—यस्मादहमेव 'वेदवित् तस्मात् सर्व्ववेदार्थनिष्कर्षं संक्षेपेण ब्रवीमि शृणु इत्याह-द्वाविमाविति त्रिभिः । लोके चतुर्द्दशभूवनात्मके जड़प्रपञ्चे इमौ द्वौ पुरुषौ चेतनौ स्तः कौ तावत् आह-क्षरं स्वस्वरूपात् क्षरति विच्युतो भवतीति क्षरो जीवः, स्वस्वरूपान्न क्षरतीत्यक्षर ब्रह्मैव,-"एतद्वै तदक्षरं गार्गि ब्राह्मणा विविदिषन्ति" इति श्रुतेः "अक्षरं ब्रह्म परमम्" इति स्मृतेश्च अक्षर शब्दो ब्रह्मवाचक एव दृष्टः । क्षराक्षरयोरर्थं पुनर्विशदयति सर्व्वाणि भूतानि एको जीव एव अनाद्यविद्यया स्वरूपविच्युतः सन् कर्म्मपरतन्त्रः समष्ट्यात्मको ब्रह्मादिस्थावरान्तानि भूतानि भवतीत्यर्थः । जात्या वा एकवचनम् । द्वितीयपुरुषोऽक्षरस्तु कूटस्थ एकेनैव स्वरूपेणाविच्युतिमता सर्व्वकालव्यापी । "एकरूपतया तु यः कालव्यापी स कूटस्थः" इत्यमरः ॥ १६ ॥

गी०भू०—बादरायणात्मना निर्णीतं वेदार्थं संक्षिप्याह-द्वाविति । 'लोक्यते तत्त्वमनेन' इति व्युत्पत्तेर्लोके वेदे, द्वौ पुरुषौ प्रथितौ इमाविति प्रमाणसिद्धता सूच्यते । तौ काविवत्याह-क्षरश्चेति । शरीरक्षरणात् क्षरोऽनेकावस्थो बद्धोऽचित्संसर्गैकधर्म्म-

सम्बन्धादेकत्वेन निर्द्दिष्टः, अक्षरस्तदभावादेकावस्थो मुक्तोऽचिद्वियोगैकधर्म्मसम्बन्धादेकत्वेन निर्द्दिष्टः । क्षराक्षरौ स्फुटयति–सर्व्वाणि ब्रह्मादिस्तम्वान्तानि भूतानि क्षरः, कूटस्थः सदैकावस्थो मुक्तस्त्वक्षरः । एकत्वनिर्द्देशः प्रागुक्तयुक्तेर्वोध्यः–"बहवो ज्ञानतपसा" इत्यादेः, "इदं ज्ञानमुपाश्रित्य" इत्यादेश्च बहुत्वसंख्याकः सः ॥१६॥

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥१७॥

सारा०ब०—ज्ञानिभिरुपास्यं ब्रह्मोक्त्वा योगिभिरुपास्यं परमात्मानमाह–उत्तम इति । तु-शब्दः पूर्व्ववैशिष्ट्यद्योतकः । ज्ञानिभ्यश्चाधिको योगीत्युपासकवैशिष्ट्यादेवोपास्यवैशिष्ट्यं च लभ्यते । परमात्मतत्त्वमेव दर्शयति–य ईश्वर ईशनशीलोऽव्ययो निर्व्विकार एव सन् लोकत्रयं कृत्स्नमाविश्य बिभर्त्ति धारयति पालयति च ॥ १७ ॥

गी०भू०—यदर्थं द्वौ पुरुषौ निरूपितौ, तमाह–उत्तम इति । अन्यः क्षराक्षराभ्यां, न तु तयोरेवैकः संकल्प इति भावः । तत्र श्रुतिसम्मतिमाह–परमात्मेति । उत्तमताप्रयोजकं धर्म्ममाह–यो लोकेति । न चैतज्जगद्विधारणपालनरूपमीशनं–बद्धस्य जीवस्य कर्म्मासम्भवात्, न च मुक्तस्य "जगद्व्यापारवर्ज्जम्" इति प्रतिषेधाच्च ॥१७॥

यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥१८॥

सारा०ब०—योगिभिरुपास्यं परमात्मानमुक्त्वा भक्तैरुपास्यं भगवन्तं वदन् भगवत्त्वेऽपि स्वस्य कृष्णस्वरूपस्य पुरुषोत्तम



इति नाम व्याचक्षाणः सर्व्वोत्कर्षमाह–यस्मादिति । क्षरं पुरुषं जीवात्मानम् अतीतः अक्षरात् पुरुषात् ब्रह्मतः उत्तमादविकारात् परमात्मनः पुरुषादप्युत्तमः । "योगिनामपि सर्व्वेषां मद्गतेनान्तरात्मना । श्रद्धावान भजते यो मां स मे युक्ततमो मतः ॥" इति उपासकवैशिष्ट्यादेवोपास्य-वैशिष्ट्यलाभात् , चकाराद्भगवतो वैकुण्ठनाथादेः सकाशादपि "एते चांशकलाः पुंसः कृष्णस्तु भगवान स्वयम्" इति सूतोक्तेरहमुत्तमः । अत्र यद्यप्येकमेव सच्चिदानन्द-स्वरूपं वस्तु ब्रह्मपरमात्मभगवत्शब्दैरुच्यते, न तु वस्तुतः स्वरूपतः कोऽपि भेदोऽस्ति, "स्वरूपद्वयाभावात्" ( भा ६ । ९ । ३५ ) इति षष्ठस्कन्धोक्तेः, तदपि तत्तादुपासकानां साधनतः फलतश्च भेददर्शनात् भेद इव व्यवह्रियते । तथा हि ब्रह्मपरमात्मभगवदुपासकानां क्रमेण तत्तत्प्राप्तिसाधनं ज्ञानं योगो भक्तिश्च, फलञ्च ज्ञानयोगयोर्वस्तुतो मोक्ष एव, भक्तेस्तु प्रेमवत् पार्षदत्वञ्च ; तत्र भक्त्या विना ज्ञानयोगाभ्यां "नैष्कर्म्म्यमप्यच्युतभाववर्ज्जितं न शोभते" इति, "पुरेह भूमन् बहवोऽपि योगिनः" इत्यादिदर्शनान्न मोक्ष इति । ब्रह्मोपासकैः परमात्मोपासकैः स्वसाध्यफलसिद्ध्यर्थं भगवतो भक्तिरवश्यं कर्त्तव्यैव भगवदुपासकैस्तु स्वसाध्यफलसिद्ध्यर्थं न ब्रह्मोपासनापि परमात्मोपासना क्रियते,—"न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह" इति, "यत् कर्म्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत्" इत्यादौ "सर्व्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा । स्वर्गापवर्गं मद्धाम कथञ्चिद्यदि वाञ्छति ॥" इति, या वै साधनसम्पत्तिः पुरुषार्थचतुष्टये । तया विना तदाप्नोति नरो नारायणाश्रयः ॥" इत्यादिवचनेभ्यः । अतएव भगवदुपासनया स्वर्गापवर्गप्रेमादीनि सर्व्वफलान्येव लब्धुं शक्यन्ते । ब्रह्म-परात्मोपासनया तु न प्रेमादीनीत्यत एव ब्रह्मपरमात्माभ्यां भगवदुत्कर्षः खलु अभेदेऽप्युच्यते ;

यथा तेजस्त्वेनाभेदेऽपि ज्योतिर्दीपाग्निपुञ्जेषु मध्ये शीताद्यार्त्ति-क्षयाद्धेतोरग्निपुञ्ज एव श्रेष्ठ उच्यते तत्रापि भगवतः श्रीकृष्णस्य तु परम एवोत्कर्षः, यथा अग्निपुञ्जादपि सूर्य्यस्य ; येन ब्रह्मो-पासना-परिपाकतो लभ्यो निर्व्वाण-मोक्षः स्वद्वेष्टृभ्योऽप्यघबक-जरसन्धादिभ्यो महापापिभ्यो दत्त इति। अतएव "ब्रह्मणो हि प्रतिष्ठाहम्" इत्यत्र यथावदेव व्याख्यातं श्रीस्वामिचरणैः। श्रीमधुसूदन-सरस्वतीपादैरपि "चिदानन्दाकारं जलदरुचिसारं श्रुतिगिरां, ब्रजस्त्रीणां हारं भवजलधिपारं कृतधियाम्। बिहन्तुं भूभारं बिदधदवतारं मुहुरहो, ततो बारं बारं भजत कुशलारम्भ-कृतिनः॥" इति, "वंशीबिभूषितकरान्नवनीरदाभात्, पीताम्बरादरुणबिम्बफलाधरौष्ठात्। पूर्णेन्दुसुन्दरमुखादरबिन्दनेत्रात् कृष्णात् परं किमपि तत्त्वमहं न जाने॥" इति, "प्रमाणतोऽपि निर्णीयं कृष्णमाहात्म्यमद्भुतम्। न शक्नुवन्ति ये सोढुं ते मूढा निरयं गताः॥" इत्युक्तवद्भिः कृष्णे सर्व्वोत्कर्ष एव व्यवस्थापित इत्यतः "द्वाविमौ" इत्यादि श्लोकत्रयस्यास्य व्याख्यायामस्यामभ्यसूया नाविष्कर्त्तव्या नमोऽस्तु केवल-बिद्भ्यः ॥ १८ ॥

गी०भू०—अथ पुरुषोत्तम-नाम-निर्व्वचनं स्वस्य तत्त्वमाह—यस्मादिति—उत्तम उत्कृष्टतमः। लोके पौरुषेयागमे "लोक्यते वेदार्थोऽनेन" इति निरुक्तेः, वेदे-"तावदेष संप्रसादोऽस्माच्छरी-रात् समुत्थाय परं ज्योतीरूपं संपद्य स्वेन रूपेणाभिनिष्पद्यते, स उत्तमः पुरुषः" इत्यादौ प्रथितः यत् परं ज्योतिः संप्रसादेनोप-सम्पन्नं, स उत्तमः पुरुषः परमात्मेत्यर्थः। लोके च-"तैर्बिज्ञा-पितकार्य्यस्तु भगवान् पुरुषोत्तमः। अवतीर्णो महायोगी सत्य-वत्यां पराशरात्" इत्यादौ प्रथितः॥१८॥



यो मामेवमसंमूढो जानाति पुरुषोत्तमम्।
स सर्वविद्भजति मां सर्वभावेन भारत ॥१९॥

सारा०व०—नन्वेतस्मिंस्त्वया व्यवस्थापितेऽप्यर्थे वादिनो बिबदन्त एव तत्र, बिवदन्तां ते मन्मायामोहिताः साधुस्तु न मुह्यतीत्याह—यो मामिति। असंमूढो वादिनां वादैरप्राप्तसंमोहः। स एव सर्व्वबित् अनधीतशास्त्रोऽपि स एव सर्व्वशास्त्रार्थ-तत्त्वज्ञः। तदन्यः किलाधीताध्यापितसर्व्वशास्त्रोऽपि संमूढः सम्यङ्मूर्ख एवेति भावः। तथा य एवं जानाति, स एव मां सर्व्वतोभावेन भजति, तदन्यो भजन्नपि न मां भजतीत्यर्थः॥१९॥

गी०भू०—तात्पर्य्यद्योतनाय पुरुषोत्तमत्व-वेत्तुः फलमाह—यो मामिति। एवं मदुक्तनिरुक्त्या, न त्वश्वकर्णादिवत् संज्ञामात्र-त्वेन, यो मां पुरुषोत्तमं जानात्यसंमूढः-प्रोक्ते पुरुषोत्तमत्वे संशयशून्यः सन्, स श्लोकत्रयस्यैवार्थं जानन् सर्व्वबित्, निखि-लस्य वेदस्य तत्रैव तात्पर्य्यात्। पुरुषोत्तमत्वज्ञो मां सर्व्वभावेन सर्व्वप्रकारेण भजत्युपास्ते। सर्व्ववेदार्थवेत्तरि सर्व्वभक्त्यङ्गानुष्ठा-तरि च यो मे प्रसादः, स तस्मिन् भवेदिति मे पुरुषोत्तमत्वे सन्दिहानस्त्वधीतसर्व्ववेदोऽप्यज्ञः, सर्व्वथा भजन्नप्यभक्त इति भावः॥१९॥

इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ।
एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत ॥२०॥

इति महाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्व्वणि श्रीभगवद्गीतासूपनिषत्सु ब्रह्मबिद्यायां योगशास्त्रे श्रीकृष्णा-र्ज्जुनसंवादे पुरुषोत्तमयोगो नाम पञ्चदशोऽध्यायः।



साराθब०—अध्यायार्थमुपसंहरति—इतीति। विंशत्या श्लोकैरेभिरतिरहस्यं शास्त्रमेव सम्पूर्णं मयोक्तम् ॥ २० ॥

जडचैतन्यवर्गाणां विवृतं कुर्वता कृतम् ।
कृष्ण एव महोत्कर्ष इत्यध्यायार्थ ईरितः ॥
इति सारार्थवर्षिण्यां हर्षिण्यां भक्तचेतसाम् ।
गीतास्वयं पञ्चदशः सङ्गतः सङ्गतः सताम् ॥

गी०भ०—अथैतदपात्रेष्वप्रकाश्यमिति भावेनाह—इतीति—इत्येवं संक्षेपरूपं पुरुषोत्तमत्व-निरूपकमिदं त्रिश्लोकीशास्त्रं तुभ्यं परमभक्ताय मयोक्तम्। हे अनघ! त्वयाप्यपात्रेषु नैतत् प्रकाश्यमिति भावः। एतद्बुद्ध्वा बुद्धिमान् परोक्षज्ञानी स्यात्, कृतकृत्योऽपरोक्षज्ञानी चेति पुरुषोत्तमत्व-ज्ञानमभ्यर्च्यते ॥२०॥

बद्धान्मुक्ताच्च यः पुंसो भिन्नस्तद्भृत्तदुत्तमः ।
स पुमान् हरिरेवेति प्राप्तं पञ्चदशादतः ॥

इति श्रीमद्भगवद्गीतोपनिषद्भाष्ये पञ्चदशोऽध्यायः ।

# षोडशोऽध्यायः

श्रीभगवानुवाच—

अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥१॥
अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् ।
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥२॥



तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ।
भवन्ति सम्पदं दैवीमभिजातस्य भारत ॥३॥

सारा०ब०—षोड़शे सम्पदं दैवीमासुरीमप्यवर्णयत् ।
सर्गञ्च द्विविधं दैवमासुरं प्रभुरक्षयात् ॥

अनन्तराध्याये "ऊर्द्ध्वमूलमधःशाखम्"इत्यादिना वर्णितस्य संसाराश्वत्थवृक्षस्य फलानि न वर्णितानि इत्यनुस्मृत्यास्मिन्नध्याये तस्य द्विविधानि मोचकानि बन्धकानि च फलानि वर्णयिष्यन् प्रथमं मोचकान्याह—अभयमिति त्रिभिः। त्यक्तपुत्रकलत्रादिक एकाकी निर्ज्जने वने कथं जीविष्यामीति भयराहित्यमभयम्; सत्त्वसंशुद्धिः चित्तप्रसादः; ज्ञानयोगे ज्ञानोपाये अमानित्वादौ व्यवस्थितिः परिनिष्ठा, दानं स्वभोज्यस्यान्नादेर्यथोचितं संविभागः, 'दमो' बाह्येन्द्रियसंयमः, 'यज्ञो' देवपूजा, 'स्वाध्यायः' वेदपाठः आदीनि स्पष्टानि; 'त्यागः' पुत्रकलत्रादिषु ममता-त्यागोऽलोलुप्त्वं लोभाभावः-एतानि षड्विंशतिरभयादीनि दैवीं सात्त्विकीं सम्पदमभिलक्ष्य जातस्य सात्त्विक्याः सम्पदः प्राप्तिव्यञ्जके क्षणे जन्म लब्धवतः पुंसो भवन्ति ॥ १-३ ॥

गी०भू०—दैवीं तथासुरीं कृष्णः सम्पदं षोड़शेऽब्रवीत् ।
उपादेयत्वहेयत्वे बोधयन् क्रमतस्तयोः ॥

पूर्व्वत्र 'अश्वत्थमूलान्यनुसन्ततानि' इत्यादिना प्राचीनकर्म्मनिमित्ताः शुभाशुभवासनाः संसारतरोरवान्तरमूलत्वेनोक्ताः। एता एव नवमे दैव्यासुरी राक्षसी चेति प्राणिनां प्रकृतयो निगदिताः। तत्र वैदिकार्थानुष्ठानहेतुः सात्त्विकी शुभवासना मोक्षोपयोगिनी दैवी प्रकृतिः, सैवेह दैवीसम्पच्छब्देनोपादेयं फलम्। स्वाभाविकरागद्वेषानुसारिणी सर्व्वानर्थहेतू राजसी तामसी

चाशुभबासना आसुरी राक्षसी च प्रकृतिर्निरयनिपातोपयोगिनी सा, सा चासुर-सम्पत्तयोर्हेयं फलमित्येतद्बोधयितुं षोड़शस्यारम्भः। अत्र दैबीं सम्पदं भगबानुबाच–अभयमित्यादित्रिकेण। चतुर्णामाश्रमाणां बर्णानाञ्च धर्म्माः क्रमादिह कथ्यन्ते। सन्न्यासिनां ताबदाह–अभयं निरुद्यमः कथमेकाकी जीबिष्यामीति भयशून्यत्वम्, सत्त्वसंशुद्धिः स्वाश्रमधर्म्मानुष्ठानेन मनोनैर्म्मल्यम्, ज्ञानयोगे श्रबणादौ ज्ञानोपाये, व्यबस्थितिः परिनिष्ठेति त्रयम्, अथ गृहस्थानामाह–दानं स्वभोग्यस्य न्यायार्ज्जितस्य अन्नादेः सत्पात्रे यथायोग्यं समर्पणम्, दमो बाह्येन्द्रियबर्गस्य यथायोग्यं संयमः, यज्ञोऽग्निहोत्रादेर्बिहितस्यानुष्ठानमिति त्रयम्, अथ ब्रह्मचारिणामाह–स्वाध्यायो ब्रह्मयज्ञः शक्तिमतो भगबतः प्रतिपादकोऽयमपौरुषेयोऽक्षरराशिरित्यनुसन्धाय बेदाभ्यासनिष्ठतेत्येकम्, अथ बानप्रस्थानामाहतप इति, तच्च शरीरादित्रिभेदमित्यष्टादशे बक्ष्यमाणं बोध्यमित्येकम् अथ बर्णेषु बिप्राणामाह–आर्ज्जवं सारल्यम्, तच्च श्रद्धालुश्रोतृषु स्वज्ञातार्थागोपनं ज्ञेयम्, अहिंसा प्राणिजीबिकानुच्छेदकता, सत्यमनर्थाननुबन्धियथादृष्टार्थबिषयं बाक्यम्, अक्रोधो दुर्ज्जनकृते स्वतिरस्कारेऽभ्युदितस्य कोपस्य निरोधः, त्यागो दुरुक्तेरपि तत्राप्रकाशः, शान्तिर्मनसः संयमः, अपैशुनं परोक्षे परानर्थकारि-बाक्याप्रकाशनम्, भूतेषु दया तद्दुःखासहिष्णुता, अलोलुत्वं निर्लोभता–फलोपश्छान्दसः, मार्द्दवं कोमलत्वं सत्पात्रसङ्गबिच्छेदासहनम्, ह्रीर्बिकर्म्मणि लज्जा, अचापलं व्यर्थक्रियाबिरह इति द्वादश। अथ क्षत्त्रियाणामाह–तेजस्तुच्छजनानभिभाव्यत्वम्, क्षमा सत्यपि सामर्थ्ये स्वासमानं परिभावकं प्रति कोपानुदयः, धृतिः शरीरेन्द्रियेष्ववसन्नेष्वपि तदुत्तम्भकः प्रयत्नो येन तेषां नाबसादः स्यादिति त्रयम। अथ



वैश्यानामाह–शौचं व्यापारे बाणिज्ये मायानृतादि-राहित्यम्, अद्रोहः परजिघांसया खड्गाद्यग्रहणमिति द्वयम्। अथ शूद्राणामाह–नातिमानिता आत्मनि पूज्यत्वभाबना-शून्यता बिप्रादिषु त्रिषु नम्रतेत्येकमिति षड्बिंशतिः। एते तत्र तत्र प्रधानभूता बोध्या अनुक्तानामप्युपलक्षणार्थाः। देहारम्भकालोन्मुखैः सुकृतैर्व्यक्तां दैबीं शुभबासनामभिलक्षीकृत्य जातस्य पुरुषस्य भबन्ति उदयन्ते–"पुण्यः पुण्ये कर्म्मणा भबति पापः पापेन" इति श्रुतेः। देवाः खलु परेशानुवृत्तिशीलास्तेषामियं सम्पदनया तत्प्रापकज्ञानभक्तिसम्भबात् ससारतरोरुपादेयं फलमेतत् ॥१–३॥

दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च।
अज्ञानं चाभिजातस्य पार्थ सम्पदमासुरीम् ॥४॥

साराᵒबᵒ—बन्धकानि फलान्याह–'दम्भः' स्वस्याधार्म्मिकत्वेऽपि धार्म्मिकत्वप्रख्यापनम्, 'दर्पो' धनबिद्यादिहेतुको गर्व्वोऽभिमानोऽन्यकृतसम्मननाकाङ्क्षित्वं कलत्रपुत्रादिष्वासक्तिर्वा, 'क्रोधः' प्रसिद्धः 'पारुष्यं' निष्ठुरता, अज्ञानमबिवेकः, आसुरीमित्युपलक्षणं राक्षसीमपि सम्पदमभिजातस्य राजस्यास्तामसस्याश्च सम्पदः प्राप्तिसूचकक्षणे जन्मलब्धवतः पुंसः एतानि दम्भादीनि भवन्तीत्यर्थः ॥ ४ ॥

गीᵒभूᵒ—अथ नरकहेतुमासुरीं सम्पदमाह–दम्भ इत्येकेन। दम्भो धार्म्मिकत्वख्यातये धर्म्मानुष्ठानम्, दर्पो बिद्याभिजनजन्यो गर्व्वः, अभिमानः स्वस्मिन्नत्यर्च्चत्वबुद्धिः, क्रोधः प्रसिद्धः, पारुष्यं प्रत्यक्षं रुक्षभाषितम्, चकारश्चापलादेः समुच्चायकः, अज्ञानं कार्य्याकार्य्यबिवेकधीशून्यत्वम्, चकारोऽधृत्यादेः समुच्चायकः। एते देहारम्भकालोन्मुखैर्दुष्कृतैर्व्यक्तामासुरीमशुभबासनामभिलक्ष्य जातस्य पुरुषस्य भबन्ति–"पापः पापेन" इति श्रुतेः ॥४॥

दैवी सम्पद्विमोक्षाय निबन्धायासुरी मता ।
मा शुचः सम्पदं दैवीमभिजातोऽसि पाण्डव ॥५॥

सारा०ब०—एतयोः सम्पदोः कार्य्यं दर्शयति-दैवीति । हन्त हन्त शरप्रहारैर्बन्धून् जिघांसोः पारुष्यक्रोधादिमतो ममैवेयमासुरीसम्पत् संसारबन्धप्रापिका दृश्यत इति खिद्यन्तमर्ज्जुनमाश्वासयति--मा शुच इति। पाण्डवेति तव क्षत्रियकुलोत्पन्नस्य संग्रामे पारुष्यक्रोधाद्याः धर्म्मशास्त्रे विहिता एव, तदन्यत्रैव ते हिंसाद्या आसुरी सम्पदिति भावः ॥ ५ ॥

गी०भू०—एतयोः सम्पदोः फलभेदमाह-दैवीत्यर्द्धकेन स्फुटम्। बाणवृष्ट्या पूज्यान् द्रोणादीन् जिघांसोः क्रोधपारुष्यवतो ममेयमासुरी सम्पन्नरकं जनयेदिति शोचयन्तं पार्थमालक्ष्याह—मा शुच इति। हे पाण्डवेति क्षत्रियस्य ते युद्धे बाणनिक्षेपपारुष्यादिकं विहितत्वात् दैव्येव सम्पत्ततोऽन्यत्र त्वासुरीति मा शुचः शोकं मा कुरु ॥५॥

द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च ।
दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ॥६॥

सारा०ब०—तदपि विषण्णमर्ज्जुनं प्रति आसुरीसम्पदं प्रपञ्चयितुमाह--द्वाविति। विस्तरशः प्रोक्त इति अभयं सत्त्वसंशुद्धिरित्यादि ॥ ६ ॥

गी०भू०—तथाप्यनिवृत्तशोकं तमालक्ष्यासुरीं सम्पदं प्रपञ्चयति--द्वाविति। अस्मिन् कर्म्माधिकारिणि मनुष्यलोके द्विविधौ भूतसर्गौ मनुष्यसृष्टी भवतः। यदायं मनुष्यः शास्त्रात् स्वाभाविकौ रागद्वेषौ विनिधूय शास्त्रीयार्थानुष्ठायी तदा दैवः, यदा शास्त्रमुत्सृज्य स्वाभाविक-रागद्वेषाधीनोऽशास्त्रीयान् धर्म्मान्



आचरति, तदा त्वासुरः. न हि धर्म्माधर्म्माभ्यामन्या कोटिस्तृतीयास्ति। श्रुतिश्चैवमाह-“द्वया ह प्राजापत्या देवाश्चासुराश्च” इत्यादिना। तत्र दैवो विस्तरशः प्रोक्तः ‘अभयम्’ इत्यादिना। अथासुरं शृणु विस्तरशो वक्ष्यामि ॥६॥

प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥७॥

सारा०ब०—धर्म्मे प्रवृत्तिम्, अधर्म्मान्निवृत्तिम् ॥ ७ ॥

गी०भू०—आसुरं सर्गमाह-प्रवृत्तिञ्चेति द्वादशभिः। आसुरा जना धर्म्मे प्रवृत्तिमधर्म्मान्निवृत्तिञ्च न जानन्ति, चकाराभ्यां तयोः प्रतिपादके विधिनिषेधवाक्ये च न जानन्ति—वेदेष्वास्थाभावादित्युक्तम्। तेषु शौचं वाह्याभ्यन्तरं तत्प्रवृत्ति-तन्निवृत्त्युपयोगि न विद्यते। नाप्याचारो मन्वादिभिरुक्तः। न च सत्यं प्राणिहितानुबन्धि यथादृष्टार्थविषयवाक्यमिति गृध्रगोमायुवत्तेषामुपदेशादि ॥७॥

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसंभूतं किमन्यत्कामहेतुकम् ॥८॥

सारा०ब०—असुराणां मतमाह्--असत्यं मिथ्याभूतं भ्रमोपलब्धमेव जगत्तो वदन्ति। ‘अप्रतिष्ठ’ प्रतिष्ठा आश्रयस्तद्रहितम्,--न हि खपुष्पस्य किञ्चिदधिष्ठानमस्तीति भावः। अनीश्वरं मिथ्याभूतत्वादेवेश्वरकर्त्तृकमेतन्न भवति। स्वेदजादीनामकस्मादेव जातत्वात् अपरस्परसम्भूतमन्यंत् किं वक्तव्यम ? कामहेतुकं--कामो वादिनामिच्छैव हेतुर्यस्य तत्। मिथ्याभूतत्वादेव ये यथा कल्पयितुं शक्नुवन्ति, तथैवैतदिति। केचित् पुनरेवं व्याचक्षते-असत्यं नास्ति सत्यं

वेदपुराणादिकं प्रमाणं यत्र तत्; तदुक्तम्–"त्रयो वेदस्य कर्त्तारो मुनिभण्डनिशाचरा:" इत्यादि; 'अप्रतिष्ठ' नास्ति धर्म्माधर्म्मरूपा प्रतिष्ठा व्यवस्था यत्र तत् धर्म्माधर्म्मावपि भ्रमोपलब्धाविति भाव:। 'अनीश्वरम्' ईश्वरोऽपि भ्रमेणैवोपलभ्यत इति भाव:। ननु स्त्रीपुंसयो: परस्परप्रयत्नविशेषात् जगदिदम् उत्पन्नं दृश्यते तत्र नैतदपीत्याह–अपरस्परसम्भूतमिति। मातापितृभ्यां बालक उत्पद्यत इत्यपि भ्रम एव कुलालस्य घटोत्पादने ज्ञानमिव मातापित्रोस्तादृशबालोत्पादने किल नास्ति ज्ञानमिति भाव:। किमन्यदन्यत् किं वक्तव्यमिति भाव:। तस्मादिदं जगत् कामहेतुकं कामेन स्वेच्छयैव हेतुका हेतुकल्पका यत्र तत्; युक्तिबलेन ये यत् परमाणुमायेश्वरादिकं जल्पयितुं शक्नुवन्ति ते तदेव तस्य हेतुं वदन्तीत्यर्थ: ॥८॥

गी०भू०—तेषां सिद्धान्तान् दर्शयति तत्रैकजीववादिनामाह–असत्यमिति। इदं जगदसत्यं शुक्तिरजतादिवद् भ्रान्तिविजृम्भितम्, अप्रतिष्ठं खपुष्पवन्निराश्रयम्, नास्त्येवेश्वरो जन्मादिहेतुर्यस्य तत्। सोऽपि तद्वद् भ्रान्तिरचित एव, पारमार्थिके तस्मिन् स्थिते तन्निर्म्मितजगत्त्वाद्वद्दृष्टनष्टप्रायं न स्यात्; तस्मादसत्यं जगत् त एव मन्यन्ते। एकैव निर्व्विशेषा सर्व्वप्रमाणावेद्या चिद्भ्रमादेको जीवस्ततोऽन्यज्जडर्जीवेश्वरात्मकं तदज्ञानात् प्रतिभाषते, आस्वरूपसाक्षात्कारादविसम्वादि स्वाप्निकमिव हस्त्यश्वरथादिकमाजागरात्, सति च स्वरूपसाक्षात्कारे तदज्ञानकल्पितं तज्जीवत्वेन सह निवर्त्तेत स्वाप्निकरथाश्वादीव सुषुप्ताविति। अथ स्वभाव-वादिनां बौद्धानामाह–अपरस्परसम्भूतमिति स्त्रीपुरुषसम्भोगजन्यं जगन्न भवति घटोत्पादने कुलालस्येव बालोत्पादने पित्रादेर्ज्ञानाभावात् सत्यप्यसकृत्सम्भोगे सन्तानानुत्पत्तेश्च स्वेदजादीनामकस्मादुत्पत्तेश्च, तस्मात्



स्वभावादेवेदं भवतीति। अथ लोकायतिकानामाह–कामहेतुकमिति। किमन्यद्वाच्यम्? स्त्रीपुरुषयो: काम एव प्रवाहात्मना हेतुरस्येति स्वार्थेठञ्, अथवा जैनानामाह–काम: स्वेच्छैव हेतुरस्येति। युक्तिबलेन यो यत् कल्पयितुं शक्नुयात्, स तदेव तस्य हेतुं वदतीत्यर्थ: ॥८॥

**एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धय:।**
**प्रभवन्त्युग्रकर्माण: क्षयाय जगतोऽहिता: ॥९॥**

सारा०व०—एवं वादिनोऽसुरा: केचिन्नष्टात्मन: केचिदल्पज्ञाना: केचिदुग्रकर्म्माण: स्वच्छन्दाचारा महानारकिनो भवन्तीत्याह–एतामित्येकादशभि:। अवष्टभ्यालम्ब्य ॥९॥

गी०भू०—स्व-स्व-मतनिर्णायकानि दर्शनानि च तै: कृतानि यान्यास्थाय जगद्विनश्यतीत्याह–एतामिति जात्यैकवचनम्। एतानि दर्शनान्यवष्टभ्यालम्ब्याल्पवुद्धयस्तुच्छमतयो नष्टात्मानोऽदृष्टदेहादिविविक्तात्मतत्त्वा उग्रकर्म्माणो हिंसा-पैशुन्यपारुष्यादि-कर्म्मनिष्ठा जगतोऽहिता: शत्रवश्च सन्तस्य क्षयाय प्रभवन्ति–परमार्थाज्जगद्भ्रंशयन्तीत्यर्थ: ॥९॥ सन्तोऽस्य

**काममाश्रित्य दुष्पूरं दम्भमानमदान्विता:।**
**मोहाद्गृहीत्वाऽसद्ग्राहान्प्रवर्तन्तेऽशुचिव्रता: ॥१०॥**

सारा०व०—असद्ग्राहान् प्रवर्त्तन्ते कुमते एव प्रवृत्ता भवन्ति। अशुचीनि शौचाचारवर्जितानि व्रतानि येषां ते ॥१०॥

गी०भू०—अथ तेषां दुर्वृत्ततां दुराचारताञ्चाह–काममिति। दुष्पूरं कामं विषयतृष्णामाश्रित्य मोहान्न तु शास्त्रादसद्ग्राहान् गृहीत्वाशुचिव्रता: सन्त: प्रवर्त्तन्ते। असद्ग्राहान् दुष्टनक्रवदात्मविनाशकान् कल्पितदेवता-तन्मन्त्र-तदाराधननिमित्ताक-कामिनी-

पार्थिवनिध्याकर्षणरूपान् दुराग्रहानित्यर्थः, अशुचीनि श्मशाननिषेवण-मद्यमांसविषयाणि व्रतानि येषां ते ; दम्भेनाधर्म्मिष्ठत्वेऽपि धर्म्मिष्ठत्व-ख्यापनेन मानेनापूज्यत्वेऽपि पूज्यत्व ख्यापनेन मदेनानुत्कृष्टत्वेऽप्युत्कृष्टत्वारोपणेन चान्विताः ॥१०॥

चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ।
कामोपभोगपरमा एतावदिति निश्चिताः ॥११॥

साराºबº—प्रलयान्तां प्रलयो मरणं तत्पर्य्यन्ताम् । एतावदितीन्द्रियाणि विषयसुखे मज्जन्तु नाम, का चिन्तेत्येतावदेव शास्त्रार्थतात्पर्य्यमिति निश्चितं येषां ते ॥११॥

गीºभूº—अपरिमेयामपरां प्रलयान्ताञ्च मरणकालावधिसाध्यवस्तुविषयां चिन्तामुपाश्रितः कामोपभोगः सम्यग्विषयसेवैव परमः पुमर्थो येषां ते ; एतावदेव कामोपभोगमात्रमेवैहिकम् ; न त्वतोऽन्यत् पारलौकिकं सुखमस्तीति कृतनिश्चयाः ॥११॥

आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।
ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान् ॥१२॥

गीºभूº—आशेति स्पष्टम् । ईहन्ते कर्त्तुं चेष्टन्ते अन्यायेन कूटसाक्ष्येण चौर्य्येण च ॥१२॥

इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥१३॥
असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी ॥
आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥१५॥



अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥१६॥

साराºबº—अशुचौ नरके वैतरण्यादौ ॥१६॥

गीºभूº—तेषां धनाशानुवृत्तिं मनोराज्योक्त्या विवृण्वन् नरकनिपातमाह—इदमितिचतुर्भिः । इदं क्षेत्रं पशुपुत्रादि मयैवाद्य स्व-धी-बलेन लब्धम ; इमं मनोरथं मनःप्रियमर्थमहमेव स्वबलेन प्राप्स्यामि, स्वबलेनैव लब्धमिदं धनं मम सम्प्रत्यस्ति, इदमिष्यमाणं धनमागामिवर्षे मद्बलेनैव मे भविष्यति, न त्वदृष्टबलेन ईश्वरप्रसादेन वेत्यर्थः । एवं धनतृष्णां प्रपञ्च्य दुष्टं भावं प्रपञ्चयति—असाविति । यज्ञदत्ताख्योऽसौ शत्रुर्मयातिबलिना हतः, अपरानपि शत्रूनहमेव हनिष्यामि, तेषां दारधनादि च नेष्यामीति च-शब्दात्—मत्तो न कोऽपि जीवेदिति भावः । नन्वीश्वरेच्छामदृष्टं च केचिज्जयहेतुमाहुस्तत्राह—अहमेवेश्वरः स्वतन्त्रो यदहं भोगी स्वतो निखिलभोगसम्पन्नः सिद्धोऽस्मीति, यदि कश्चिदीश्वरं कल्पयति, तर्हि स मामेवेश्वरं कल्पयतु, न तु मत्तोऽन्यमनुपलब्धेरिति भावः । ननु सम्पदा कुलेन चान्ये त्वत्समा वीक्ष्यन्ते तत् कथमीश्वरस्त्वमिति चेदाह—आढ्यः सम्पन्नः स्वतोऽहमस्म्यभिजनवान् कुलीनश्च, न तु केनचिन्निमित्तेनातो मत्सदृशोऽन्यः कोऽस्ति—न कोऽपीत्यहमेवेश्वरः, अतोऽहं स्वबलेनैव यक्ष्ये, दिव्याङ्गनानां सङ्गतिं करिष्ये, दास्यामि, तासामधरादि खण्डयिष्याम्येव मोदिष्य इत्यज्ञानविमोहिताः सन्तो नरके पतन्तीत्यग्रिमेणान्वयः । अनेकेषु चिरप्रयाससाध्येषु वस्तुषु यच्चित्तं, तेन विभ्रान्ता विक्षिप्ता मोहमयेन जालेन समावृता मत्स्या इव ततो निर्गन्तुमक्षमाः, कामभोगेषु प्रसक्ता मध्ये मृताः सन्तो नरके पतन्त्यशुचौ वैतरण्यादौ ॥१३-१६॥

**आत्मसंभाविता स्तब्धा धनमानमदान्विताः ।**
**यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥१७॥**

सारा०व०—आत्मनैव सम्भाविताः पूज्यतां नीता न तु साधुभिः कैश्चिदित्यर्थः । अतएव स्तब्धा अनम्राः । नाममात्रेणैव ये यज्ञास्ते नामयज्ञास्तैः ॥१७॥

गी०भू०—आत्मनैव सम्भाविताः श्रैष्ठ्यं नीताः, न तु शास्त्रज्ञैः साद्भिः, स्तब्धाः अनम्राः, धनेन सम्पदा मानेन च परमहंसो महाश्रमणः श्रीपूज्यपादो महापूजाविदित्येवंलक्षणेन सत्कारेण यो मदो गर्व्वस्तेनान्विताः, नामयज्ञैर्नाममात्रेण यज्ञैः पूजाविधिभिः स्वकल्पिता देवता यजन्ते स्व-स्वकानां गृहिणामभ्युदयाय दम्भेन धर्म्मध्वजित्वेन विशिष्टा विरक्तवेशाः सन्त इत्यर्थः । अविधिपूर्व्वकम्‌ वेदाविहितं यथा भवति तथा ॥१७॥

**अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः ।**
**मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥१८॥**

सारा०व०—मां परमात्मानममानयन्त एव प्रद्विषन्तः, यद्वा आत्मपराः परमात्मपरायणाः साधवस्तेषां देहेषु स्थितं मां प्रद्विषन्तः साधुदेहद्वेषादेव मद्द्वेष इति भावः । अभ्यसूयकाः साधूनां गुणेषु दोषारोपकाः ॥१८॥

गी०भू०—सर्व्वथा वेद-तत्प्रतिपाद्येश्वरावमन्तारस्त इत्याह—अहङ्कारमिति । अहङ्कारादीन् संश्रितास्ते आत्मनः परेषाञ्च देहेषु नियामकतया भर्त्तृतया चावस्थितं मां सर्व्वेश्वरं मद्विषयकं वेदञ्च प्रद्विषन्तोऽवज्ञयापकुर्व्वन्तो भवन्ति, अभ्यसूयकाः कुटिलयुक्तिभिर्मम वेदस्य च गुणेषु दोषानारोपयन्तः । अहमेव स्वतन्त्रः करोमीत्यहङ्कारः, अहमेव पराक्रमीति बलम् , मत्तुल्यो



न कोऽप्यस्तीति दर्पः, मदिच्छैव सर्व्वसाधिकेति कामः, मत्प्रतीपमहमेव हनिष्यामीति क्रोधश्च ॥१८॥

**तानहं द्विषतः क्रूरान्संसारेषु नराधमान् ।**
**क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥१९॥**

गी०भू०—एषामासुरस्वभावात् कदाचिदपि विमोक्षो न भवतीत्याह-तानिति द्वाभ्याम् । आसुरीष्वेव हिंसातृष्णादियुक्तासु म्लेच्छव्याध-योनिषु तत्तत्कर्म्मानुगुणफलदः सर्व्वेश्वरोऽहमजस्रं पुनः पुनः क्षिपामि ॥१९॥

**आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।**
**मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥२०॥**

सारा०व०—मामप्राप्यैवेति, न तु मां प्राप्येति । वैवस्वतमन्वन्तरीयाष्टाविंशचतुर्युगद्वापरान्तेऽवतीर्णं मां कृष्णं कंसादिरूपास्ते प्राप्य प्रद्विषन्तोऽपि मुक्तिमेव प्राप्नुवन्तीति भक्तिज्ञानपरिपाकतो लभ्यामपि मुक्तिं तादृशपापिभ्योऽप्यहमपारकृपासिन्धुर्ददामि । "निभृत-मरुन्मोऽक्षदृढयोगयुजो हृदि यन्मुनय उपासते तदरयोऽपि ययुः स्मरणात्" इति श्रुतयोऽप्याहुः । अतः पूर्व्वोक्तो ममैव सर्व्वोत्कर्षो वरीवर्त्तीति भागवतामृतकारिका यथा—"मां कृष्णरूपिणं यावन्नाप्नुवन्ति मम द्विषः । तावदेवाधमां योनिं प्राप्नुवन्तीति हि स्फुटम् ॥" इति ॥२०॥

गी०भू०—ननु बहुजन्मान्ते तेषां कदाचित्त्वदनुकम्पयासुरयोनेर्विमुक्तिः स्यादिति चेत्तत्राह—आसुरीमिति । ते मूढा जन्मन्यासुरीयोनिमापन्ना मामप्राप्यैव ततोऽप्यधमामतिनिकृष्टां श्वादियोनिं यान्ति ; मामप्राप्यैव, अत्र एवकारेण मदनुकम्पायाः सम्भावनापि नास्ति । तल्लाभोपाययोग्या सज्जातिरपि दुर्लभेति,

श्रुतिश्चैवमाह—"अथ क पूयचरणा अभ्यासो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा शूकरयोनिं वा चाण्डालयोनिं वा" इत्यादिका। नन्वीश्वरः सत्यसंकल्पत्वादयोग्यस्यापि योग्यतां शक्नुयात् कर्त्तुमिति चेत्, शक्नुयादेव; यदि संकल्पयेत् बीजाभावान्न संकल्पयतीत्यतस्तस्या वैषम्यमाह सूत्रकारः—"वैषम्यनैर्घृण्येन" इत्यादिना; ततश्च 'तानहम्' इत्यादिद्वयं सूपपन्नम्। एते नास्तिकाः सर्व्वदा नारकिनो दर्शिताः; ये तु शापादसुरास्तदनुयायिनश्च राजन्याः प्रत्यत्ते उपेन्द्रनृहरि-बराहादौ विष्णौ स्वशत्रु-पक्षत्वेन विद्वेषिणोऽपि वेदवैदिककर्म्मपराः सर्व्वनियन्तारं कालशक्तिकमप्रत्यक्षं सर्व्वेश्वरं मन्यन्ते, ते तूपेन्द्रादिभिर्निहताः क्रमात् त्यजन्त्यासुरीं योनिम्, कृष्णेन निहतास्तु बिमुच्यन्ते चेति, न ते वेद बाह्याः ॥२०॥

**त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः।**
**कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥२१॥**

साराबं०—तदेवमासुरीः सम्पत्तिर्विस्तार्य्य प्रोक्ता इत्यतः साधूक्तम्—'मा शुचः सम्पदं दैवीमभिजातोऽसि भारत' इति, किंबासुराणामेतत्त्रिकमेव स्वाभाविकमित्याह—त्रिविधमिति ॥२१॥

गी०भू०—नन्वासुरीं प्रकृतिं नरक हेतुं श्रुत्वा ये मनुष्यास्तां परिहर्त्तुमिच्छन्ति, तैः किमनुष्ठेयमिति चेत्तत्राह—त्रिबिधमिति—एतत्त्रयपरिहारे तस्याः परिहारः स्यादित्यर्थः ॥२१॥

**एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः।**
**आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥२२॥**

गी०भू०—तत्त्यागे फलमाह—एतैरिति। श्रेयः स्वाश्रमकर्म्मादिश्रेयःसाधनम्, परां गतिं मुक्तिम् ॥२२॥



**यः शास्त्रविधिमुत्सृज्य वर्तते कामचारतः।**
**न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥२३॥**

साराबं०—आस्तिक्यवत एव श्रेय इत्याह—य इति - कामचारतः ॥२३॥

गी०भू०—कामादित्यागः स्वधर्म्माद्विना न भवेत्, स्वधर्म्मश्च शास्त्राद्विना न सिध्येदतः शास्त्रमेवास्थेयं सुधियेत्याह—य इति। कामचारतः स्वाच्छन्द्येन यो बर्त्तते—बिहितमपि न करोति, निषिद्धमपि करोतीत्यर्थः, स सिद्धिं पुमर्थोपायभूतां हृद्विशुद्धिं नैवाप्नोति, सुखमुपशमात्मकं च परां गतिं मुक्तिं कुतो बाप्नुयात् ॥२३॥

**तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ।**
**ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥२४॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्व्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्ज्जुनसंवादे दैवासुरसम्पद्विभागयोगो नाम षोडशोऽध्यायः।



साराबं०—आस्तिका एव बिन्दन्ति सद्गतिं सन्त एव ते।
नास्तिका नरकं यान्तीत्यध्यायार्थो निरूपितः॥ (२)
इति सारार्थवर्षिण्यां हर्षिण्यां भक्तचेतसाम्।
गीतासु षोड़शोऽध्यायः सङ्गतः सङ्गतः सताम्॥ (३)



गी०भू०—यस्माच्छास्त्रबिमुखतया कामाद्यधीना प्रबृत्तिः पुमर्थाद्विभ्रंशयति, तस्मात्तव कार्य्याकार्य्यव्यवस्थितौ किं कर्त्तव्यं

किमकर्त्तव्यमित्यस्मिन् बिषये निर्दोषमपौरुषेयं बेदरूपं शास्त्रमेव प्रमाणम् , न तु भ्रमादिदोषवता पुरुषेणोत्प्रेक्षितं बाक्यम् । अतः शास्त्रबिधानेन कुर्य्यान्न कुर्य्यादिति प्रवर्त्तनानिबर्त्तनात्मकेन लिङ्-तव्यादि-पदेनोक्तम् । कर्म्म बिहितं निषिद्धञ्च ज्ञात्वा निषिद्धं तत् परित्यजन् इह कर्म्मभूमौ बिहितकर्म्माग्निहोत्रादि युद्धादि च कर्त्तुमर्हसि लोकसंग्रहाय ॥२४॥

बेदार्थनैष्ठिका यन्ति स्वर्गं मोक्षञ्च शाश्वतम् ।
बेदबाह्यास्तु नरकानिति षोड़शनिर्णयः ॥

इति श्रीमद्भगवद्गीतोपनिषद्भाष्ये षोड़शोऽध्यायः ।



## सप्तदशोऽध्यायः



अर्जुन उवाच—

**ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः ।**
**तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥१॥**

सारा०ब०—अथ सप्तदशे बस्तु सात्त्विकं राजसं तथा ।
तामसञ्च बिबिच्योक्तं पार्थप्रश्नोत्तरं यथा ॥ (१)

नन्वासुरसर्गमुक्त्वा तदुपसंहारे "यः शास्त्रविधिमुत्सृज्य बर्त्तते कामचारतः । न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥" इति त्वयोक्तम्, तत्राहमिदं जिज्ञास इत्याह—य इति । ये शास्त्रबिधिमुत्सृज्य कामचारतो बर्त्तन्ते, किन्तु कामभोगरहिता एव श्रद्धयान्विताः सन्तो यजन्ते तपोयज्ञज्ञानयज्ञजपयज्ञादिकं कुर्व्वन्ति, तेषां का निष्ठा स्थितिः किमालम्बनमित्यर्थः । तत् किं सत्त्वम्, आहोस्वित् रज अथवा तमस्तद्ब्रूहीत्यर्थः ॥१॥



गी०भू०—सात्त्विकं राजसं बस्तु तामसञ्च बिबेकतः ।
कृष्णः सप्तदशेऽवादीत् पार्थप्रश्नानुसारतः ॥

वेदमधीत्य तद्विधिना तदर्थानुतिष्ठन्तः शास्त्रीयश्रद्धायुक्ता देवाः, बेदमवज्ञाय यथेच्छाचारिणो वेदबाह्यास्त्वासुरा इति पूर्व्वस्मिन्नध्याये त्वयोक्तम् । अथेयं मे जिज्ञासा-ये शास्त्रेति । ये जनाः पाठतोऽर्थतश्च दुर्गमं वेदं विदित्वालस्यादिना तद्विधिमुत्सृज्य लोकाचारजातया श्रद्धयान्विताः सन्तो देवादीन् यजन्ते, तेषां शास्त्रबिध्युपेक्षा-श्रद्धाभ्यां पूर्व्वनिर्णीतदैवासुरबिलक्षणानां का निष्ठा ? सत्त्वं संश्रया तेषां स्थितिरथवा रजस्तमः-संश्रयेति कोटिद्वयावबोधायाहो-शब्दो मध्ये निवेशितः ॥१॥

श्रीभगबानुवाच—

**त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।**
**सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥२॥**

सारा०ब०—भो अर्ज्जुन ! प्रथमं शास्त्रविधिमनुत्सृज्य यजतां निष्ठां शृणु, पश्चात् शास्त्रबिधित्यागिनां निष्ठां ते बक्ष्यामीत्याह—त्रिबिधेति । स्वभावः प्राचीनसंस्कारविशेषस्तस्माज्जाता श्रद्धा, सा च त्रिविधा ॥२॥

गी०भू०—एवं पृष्टो भगवानुवाच-त्रिविधेति । आलस्यात् क्लेशाच्च शास्त्रविधिमुत्सृज्य ये श्रद्धया देवादीन् यजन्ते देहिनः, सा तेषां स्वभावजा बोध्या, प्राक्तनः शुभाशुभसंस्कारः स्वभावस्तस्माज्जातेत्यर्थः । अनादित्रिगुणप्रकृतिसंसृष्टानां देहिनामनादितोऽनुबृत्तस्य संसारस्य सात्त्विकत्वादिना त्रैबिध्यात्तज्जातश्रद्धापि त्रिविधेत्याह-सात्त्विकीत्यादि । स्वभावमन्यथयितुं समर्था खलु सदुपदिष्टशास्त्रजन्या बिबेकसम्बित्, सा तेषां नास्त्यतः स्वभावजा श्रद्धा त्रिबिधा भवति । तादृक्शास्त्रजन्या श्रद्धा त्वन्यैव यथा

तदुक्तिबिधिनैव तदर्थानुष्ठानम् ॥२॥

सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ।
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥३॥

सारा०ब०—सत्त्वमन्तःकरणं त्रिबिधम्-सात्त्विकं राजसं तामसञ्च, तदनुरूपा सात्त्विकान्तःकरणानां सात्त्विकयेव श्रद्धा, राजसान्तःकरणानां राजस्येव, तामसान्तः-करणानां तामस्येवेत्यर्थः। यच्छ्रद्धो यस्मिन् यजनीये देवेऽसुरे राक्षसे बा श्रद्धाबान् यो भबति, स एव भबति तत्तच्छब्देनैव व्यपदिश्यत इत्यर्थः ॥३॥

गी०भू०—यद्यपि श्रद्धा सत्त्वगुणबृत्तिस्तथाप्यन्तःकरणधर्म्मस्य स्वभाबस्यान्तःकरणस्य च धर्म्मिणस्त्रैबिध्यात्तदुदितायास्तस्यास्त्रैबिध्यं सिद्धेदिति भावेनाह-सत्त्वानुरूपेति । सत्त्वमन्तःकरणं त्रिगुणात्मकं, तदनुरूपा सर्व्वस्य प्राणिजातस्य श्रद्धा भवति, सत्त्वप्रधानान्तःकरणस्य श्रद्धा सात्त्विकी, रजःप्रधानान्तःकरणस्य राजसी, तमःप्रधानान्तःकरणस्य तु तामसीति । अतोऽयं पूज्यपूजकरूपो लौकिकः पुरुषः श्रद्धामयस्त्रिबिधश्रद्धा-प्रचुरो यः पुरुषो यच्छ्रद्धो यस्मिन् पूज्ये देवादौ यक्षादौ प्रेतादौ च श्रद्धाबान् भबति, स पूजकोऽपि, स एब तत्तच्छब्देन व्यपदेश्य पूज्यगुणबान् पूजक इत्यर्थः ॥३॥

यजन्ते सात्त्विका देवान्यक्षरक्षांसि राजसाः ।
प्रेतान्भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥४॥

सारा०ब०—उक्तमर्थं स्पष्टयति-सात्त्विकान्तःकरणाः सात्त्विक्या श्रद्धया सात्त्विकशास्त्रबिधिना सात्त्विकान् देबानेब यजन्ते, देबेष्वेब श्रद्धाबत्त्वाद्देबा एबोच्यन्ते। एवं राजसा राजसान्तः-



करणा इत्यादि बिबरितव्यम ॥४॥

गी०भू०—कार्य्यभेदेन सात्त्विकादिभेदं प्रपञ्चयति-यजन्त इति । शास्त्रीयविबेकसम्बद्धिहीना ये जनाः स्वभाबजया श्रद्धया देबान् सात्त्विकान् बसुरुद्रादीन् यजन्ते, तेऽन्ये सात्त्विकाः, ये यक्षरक्षांसि कुबेरनिरृत्यादीनि राजसानि यजन्ते, तेऽन्ये राजसाः, ये प्रेतान् भूतगणांश्च तमसा यजन्ते, तेऽन्ये तामसाः । द्विजाः स्वधर्म्मबिभ्रष्टा देहपातोत्तरलब्धबायवीयदेहा उल्कामुखकटपूतनादिसंज्ञाः प्रेता मनूक्ताः पिशाचबिशेषा चेति व्याख्यातारश्चात् सप्तमातृकादयः। एबमालस्यात्त्यक्तवेदबिधीनां स्वभाबात् सात्त्विकताद्या निरूपिताः, एते च बलबद्वैदिकसत्प्रसङ्गात् स्वभावान् बिजित्य कदाचिद्वेदेऽप्यधिकृतो भवन्तीति बोध्यम् ॥४॥

अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ।
दम्भाहंकारसंयुक्ताः कामरागबलान्विताः ॥५॥
कर्षयन्तः शरीरस्थं भूतग्राममचेतसः ।
मां चैवान्तः शरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥६॥

सारा०ब०—यत्तथा पृष्टं-"ये शास्त्रबिधिमुत्सृज्य कामभोगरहिताः) श्रद्धया यजन्त तेषां का निष्ठा" इति, तस्योत्तरमधुना शृणुवत्याह-अशास्त्रेति द्वाभ्याम् । घोरं प्राणिभयकरं तपस्तप्यन्ते कुर्व्वन्तीत्युपलक्षणमिदं जपयागादिकमप्यशास्त्रीयं कुर्व्वन्ति । कामाचरण-राहित्यं श्रद्धान्वितत्वञ्च स्वत एव लभ्यते । दम्भाहङ्कारसयुक्ता इति—दम्भाहङ्काराभ्यां बिना शास्त्रबिध्युल्लङ्घनानुपपत्तेः ; कामः स्वस्याजरामरत्वराज्याद्यभिलाषः, रागस्तपस्यासक्तिः, बलं हिरण्यकशिपुप्रभृतीनामिव तपःकरणसामर्थ्यं तैरन्विताः शरीरस्थमारम्भकत्वेन देहस्थितम् । भूतानां पृथिव्यादीनां ग्रामं समूहं कर्षयन्तः कृशीकुर्व्वन्तो

माञ्च मदंशभूतं जीवञ्च दुःखयन्तः। आसुरनिश्चयान् असुराणामेव निष्ठायां स्थितानित्यर्थः ॥ ५-६ ॥

गी॰भू॰—वेदबाह्यानां कदाचिदपि दुर्गतेर्निस्तारो नेति पूर्व्वाध्यायोक्तं दृढयन्नाह—अशास्त्रेति द्वाभ्याम । अशास्त्रेण वेदविरुद्धेन स्वागमेन विहितं घोरं परपीडकं तपो ये तप्यन्ते कुर्व्वन्ति कामरागो विषयस्पृहा बलं च मया शक्यमेतत् सिद्धं कर्त्तुमिति दुराग्रहः शरीरस्थमारम्भकतया शरीरे स्थितं भूतग्रामं पृथिव्यादिसंघातं कर्षयन्तो वृथोपवासादिना कृशं कुर्व्वन्तोऽन्तः-शरीरस्थं शरीरमध्यगतान्तर्य्यामिणं मां चावज्ञया कर्षयन्तोऽचेतसः शास्त्रीयविवेकसम्विद्धिहीनास्तान् वेदबाह्यानासुरनिश्चयान् निश्चयेनासुरान् विद्धाति पूर्व्वोक्तानां तेषां दुर्गतिरवर्ज्जनीयैवेति भावः । स्वभावजया श्रद्धया यक्षरक्षःप्रेतादीन् यजतां बलवद्दैदिकसदनुग्रहे सति शास्त्रीयश्रद्धयासुरभावविनाशः स्यादेव, देवान् यजतां तु वस्तुतः सात्त्विकत्वात्तदनुग्रहे सति शास्त्रीया सुलभेति स्थितम ॥५-६॥

आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ।
यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥७॥

सारा॰ब॰—तदेवं ये शास्त्रविधित्यागिनः कामचारेण वर्त्तन्ते पूर्व्वाध्यायोक्ता ये चास्मिन्नध्याये आसुरशास्त्रविधिना यक्षरक्षःप्रेतादीन् यजन्ते, ये चाशास्त्रीयं तप-आदिकं कुर्व्वन्ति ते सर्व्वे आसुरसर्गमध्यगता एव भवन्तीति प्रकरणार्थः तथाप्याहारादीनां वक्ष्यमाणानां त्रैविध्यात्तद्वतां यथायोगं दैवमासुरञ्च सर्गं स्वयमेव विविच्य जानीत्याह—आहारस्त्वित्यादि-त्रयोदशभिः ॥ ७ ॥

गी॰भू॰—एवं स्थिते तदाहारादीनामपि त्रैविध्यमाह—आहारस्त्विति । श्रद्धावत् सर्व्वस्य प्रियोऽन्नादिराहारोऽपि



त्रिविधो भवति, एवं यज्ञादीनि च त्रिविधानि । तेषामाहारादीनां चतुर्णाम् ॥७॥

आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्द्धनाः ।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ॥८॥
कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥९॥
यातयामं गतरसं पूति पर्युषितं च यत् ।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥१०॥

सारा॰ब॰—आयुरिति—सात्त्विकाहारवतामायुर्वर्द्धत इति प्रसिद्धः, सत्त्वमुत्साहो रस्या इति केवलगुडादीनां रस्यत्वेऽपि रूक्षत्वमत आह—स्निग्धा इति, दुग्धफेनादीनां रस्यत्वस्निग्धत्वेऽप्यस्थैर्यमत आह—स्थिरा इति, पनसफलादीनां रस्यत्वस्निग्धत्वस्थिरत्वेऽपि हृदुदराद्यहितत्वमत आह—हृद्या हृदुदरहिता इति, तेन सगव्यशर्करा शालिगोधुमान्नादय एव रस्यत्वादिचतुष्टयगुणवत्त्वात् सात्त्विकलोकप्रिया ज्ञेयास्तेषां प्रियत्वे सत्येव सात्त्विकत्वञ्च ज्ञेयम् । किञ्च, गुणचतुष्टयवत्त्वेऽप्यपवित्र्ये सति सात्त्विकप्रियतादर्शनादत्र पवित्रा इत्यपि विशेषणं देयम्, तामसप्रियेष्वमेध्य-पद-दर्शनात् ॥ ८ ॥

सारा॰ब॰—अति-शब्दः कट्वादिषु सप्तस्वपि सम्बध्यते । अतिकटुर्निम्बादिरत्यम्ललवणोष्णः प्रसिद्ध एवातितीक्ष्णो मूलिकाविषादिर्मरीच्याद्या वा, अतिरूक्षो हिङ्गुको द्रवादिर्विदाही दाहकरो भृष्टचणकादिः एते दुःखादिप्रदाः। तत्र दुःखं तात्कालिको रसनाकण्ठादिसन्तापः शोकः पश्चाद्भाविदौर्म्मनस्यमामयो रोगः ॥ ९ ॥

सारा०ब०—यातो यामः प्रहरो यस्य पक्वस्योदनादेरतद्‌यातयामं शैत्यावस्थां प्राप्तमित्यर्थः, गतरसं त्यक्तस्वाभाविकरसं निष्पीडितरसं पक्वाम्रत्वगष्ट्यादिकं वा, पूति दुर्गन्धम्, पर्य्युषितं दिनान्तरं पक्वमुच्छिष्टं गुर्व्वादिभ्योऽन्येषां भुक्तावशिष्टममेध्यमभक्ष्यं कलञ्जादि। ततश्चैवं पर्य्यालोच्य स्वहितैषिभिः सात्त्विकाहार एव सेव्य इति भावः। वैष्णवैस्तु सोऽपि भगवद्‌निवेदितस्त्याज्य एव, भगवन्निवेदितमन्नादिकन्तु निर्गुणभक्तलोकप्रियमिति श्रीभागवताज्ज्ञेयम् ॥ १० ॥

गी०भू०—तत्र सात्त्विकाहारमाह-आयुरिति। आयुश्चिरजीवनं सत्त्वं चित्तधैर्य्यं बलं देहसामर्थ्यं सुखं तृप्तिः प्रीतिरभिरुचिः। एतासां विवर्द्धनाः रस्यत्वादिगुणवन्तः सगव्यशर्कराः शालिगोधूमादयः सात्त्विकानां प्रियास्तैरुपादेया इत्यर्थः। रस्या इति नीरसानां चणकादीनां, स्निग्धा इति रुक्षाणां गुडादीनां, स्थिरा इत्यस्थिराणां दुग्धफेनादीनां, हृद्येत्यहृद्यानां पनसफलादीनाञ्च व्यावृत्तिः, क्षुदुदराद्यहितत्वमहृद्यत्वम्। अत्र पवित्रा इति ज्ञेयं-तामसप्रियेष्वमेध्यपद दर्शनात्। राजसाहारमाह-कट्विति। सप्तस्वतिशब्दो योज्यः। अतिकटुरिति तिक्तो निम्बादिर्न च मरिचादिस्तस्य तीक्ष्णशब्देनोक्तेरत्यम्लोऽतिलवणोऽत्युष्णश्च, ख्यातोऽतितीक्ष्णो मरीचादिरतिरुक्षः कङ्गुकादिरतिविदाही राजिकादिः, एते राजसस्येष्टाः, सात्त्विकानां तु हेयाः। दुःखं तात्कालिकं जिह्वा-कण्ठादिशोषणजं, शोको दौर्म्मनस्यं पाश्चात्यमामयो रुधिरकोपः। तामसाहारमाह-यातेति। यातोऽतिक्रान्तो यामः प्रहरो यस्य राद्धस्यान्नादेस्तद्यातयामं, गतरसं वैरस्यवत्, पूतिः दुर्गन्धं, पर्य्युषितं पूर्व्वेऽह्नि राद्धमुच्छिष्टं गुरोरन्येषां भुक्तावशिष्टममेध्यमपवित्रं कलञ्जादि। ईदृग्भोजनं तामसानां प्रियं सात्त्विकानां त्वतिदूरतो हेयम्। ८-१०॥



अफलाकाङ्क्षिभिर्यज्ञो विधिदिष्टो य इज्यते।
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥११॥

सारा०ब०—अथ यज्ञस्य त्रैविध्यमाह-अफलाकाङ्क्षिभिरिति। फलाकाङ्क्षाराहित्ये कथं यज्ञे प्रवृत्तिरत आह-यष्टव्यमेवेति। स्वानुष्ठेयत्वेन शास्त्रोक्तत्वादवश्यकर्त्तव्यमेतदिति मनः समाधाय ॥ ११ ॥

गी०भू०—अथ यज्ञत्रैविध्यमाह-अफलेति त्रिभिः। अफलाकाङ्क्षिभिः फलेच्छाशून्यैर्यो यज्ञ इज्यते क्रियते विधिदृष्टो विधिवाक्याज्ज्ञातः, स सात्त्विकः। ननु फलेच्छां विना तत्र कथं प्रवृत्तिस्तत्राह-यष्टव्यमेवेति। मां प्रति वेदेनोक्तत्वान् तत् यजनमेव कार्य्यं, न तु तेन फलं साध्यमिति मनः-समाधायैकाग्रं कृत्वेत्यर्थः ॥११॥

अभिसंधाय तु फलं दम्भार्थमपि चैव यत्।
इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥१२॥

गी०भू०—फलं स्वर्गादिकमभिसन्धाय यदिज्यते दम्भार्थं वा स्वमहिमख्यापनाय, तं यज्ञं राजसं विद्धि ॥१२॥

विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम्।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥१३॥

सारा०ब०—असृष्टान्नमन्नदानरहितम् ॥ १३ ॥

गी०भू०—विधीति - असृष्टान्नमन्नदानरहितं मन्त्रहीनं स्वरतो वर्णतश्च हीनेन मन्त्रेणोपेतं श्रद्धा-विरहितं ऋत्विग्विद्वेषात् ॥१३॥

देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम्।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥१४॥

सारा०ब०—तपसस्त्रैविध्यं वदन् प्रथमं सात्त्विकस्य तपसस्त्रैविध्यमाह-देवेत्यादित्रिभिः ॥ १४ ॥

गी०भू०—क्रमप्राप्तस्य तपसः सात्त्विकादिभेदं वक्तुं तस्यादौ शारीरादिभावेन त्रैविध्यमाह-देवेति त्रिभिः। देवा वसुरुद्रादयो द्विजा ब्राह्मणश्रेष्ठा गुरवो मातृपितृदैशिकाः प्राज्ञा विदितवेद-वेदाङ्गाः परेऽत्र तेषां पूजनम्, शौचं द्विविधमुक्तम्, आर्जवं विहितनिषिद्धयोरैक्यरूप्येण प्रवृत्तिनिवृत्तिमत्त्वम्, ब्रह्मचर्य्यं विहितमैथुनञ्च-एतच्छारीरं शरीरनिर्व्वर्त्त्यं तपः ॥१४॥

अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत्
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥१५॥

सारा०ब०-अनुद्वेगकरम्-सम्बोध्यभिन्नानामप्यनुद्वेजकम्॥१५

गी०भू०--अनुद्वेगकरमुद्वेगं भयं कस्यापि यन्न करोति, सत्यं प्रमाणिकं, श्रोतुः प्रियं, परिणामे हितं च। एतद्विशेषणचतुष्टय-बद्वाक्यं तथा स्वाध्यायस्य वेदस्याभ्यसनञ्च वाङ्मयं वाचा निर्व्वर्त्त्यं तपः ॥१५॥

मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥१६॥

गी०भू०--मनसः प्रसादो वैमल्यं विषयस्मृत्यवैयग्रम्, सौम्यत्वमक्रौर्य्यं सर्व्वसुखेच्छुत्वम्, मौनमात्ममननम्, आत्मनो मनसो विनिग्रहो विषयेभ्यः प्रत्याहारः, भावसंशुद्धिर्व्यवहारे निष्कपटता-एतन्मानसं मनसा निर्व्वर्त्त्यं तपः ॥१६॥

श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः।
अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥१७॥



सारा०ब०--त्रिविधमुक्तलक्षणं कायिकवाचिकमानसम् ॥१७॥

गी०भू०--उक्तस्य तपसः सात्त्विकादितया त्रैविध्यमाह--श्रद्धयेति त्रिभिः। तदुक्तं त्रिविधं तपः फलाकाङ्क्षाशून्यैर्युक्तैरेकाग्रचित्तैर्नरैः परया श्रद्धया तप्तमनुष्ठितं सात्त्विकम् ॥१७॥

सत्कारमानपूजार्थं तपो दम्भेन चैव यत्।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥१८॥

सारा०ब०—सत्कारः साधुरयमित्यन्यैः कर्त्तव्या वाक्पूजा, मानः प्रत्युत्थानाभिवादनादिभिरन्यैः कर्त्तव्या दैहिकी पूजा, पूजान्यैर्देया मानैर्धनादिभिर्भाविनी या मानसी पूजा, तदर्थं दम्भेन च यत् क्रियते तद्राजसं तपः, चलं किञ्चित् कालिकम्-ध्रुवमनियतसत्कारादिफलकम् ॥ १८ ॥

गी०भू०—सत्कारः साधुरयं तपस्वीति स्तुतिर्मानः प्रत्युत्थानादिरादरः, पूजा चरणप्रक्षालनधनदानादिस्तदर्थं यत्तपो दम्भेन च क्रियते, तद्राजसं प्रोक्तम्, चलं किञ्चित्कालिकमध्रुवमनियतसत्कारादिफलकम् ॥१८॥

मूढग्राहेणात्मनो यत्पीडया क्रियते तपः।
परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥१९॥

सारा०ब०—मूढग्राहेण मौढ्यग्रहणेन परस्योत्सादनार्थं विनाशार्थम् ॥ १९ ॥

गी०भू०--मूढग्राहेणाविवेकजेन दुराग्रहेणात्मना देहेन्द्रियादेः पीड़या च यत्तपः परस्योत्सादनार्थं विनाशाय वा क्रियते, तत्तामसम् ॥१९॥

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥२०॥

साराο्बο—दातव्यमित्येवं निश्चयेन, न तु फलाभिसन्धिना यद्दानम् ॥ २० ॥

गीοभूο—अथ दानस्य त्रैविध्यमाह-दातव्यमिति । निश्चयेन यद्दानमनुपकारिणे पात्रे विद्यातपोभ्यां दातु रक्ताय ब्राह्मणाय यद्दीयते तद्दानं सात्त्विकम् , अनुपकारिणे प्रत्युपकारमनुद्दिश्येत्यर्थः । देशे तीर्थे काले च संक्रान्त्याद्यौ ॥२०॥

यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥२१॥

साराοबο—परिकिलष्टं कथमेतावद्व्ययितमिति पश्चात्तापयुक्तम् , यद्वा दित्साया अभावेऽपि गुर्व्वाद्याज्ञानुरोधवशादेव दत्तम् , परिकिलष्टमकल्याणद्रव्यकर्म्मकं वा ॥ २१ ॥

गीοभूο—यत्तु प्रत्युपकारार्थं दृष्टफलार्थं फलं वा स्वर्गादिकमदृष्टमुद्दिश्यानुसन्धाय दीयते तद्दानं राजसम् , परिक्लिष्टं कथमेतावद्व्ययितव्यमिति पश्चात्तापयुक्तं यथा स्यात्तथा गुरुवाक्यानुरोधाद्वा यद्दीयते, तद्राजसम् ॥२१॥

अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥२२॥

साराοबο—असत्कारोऽवज्ञायाः फलम् ॥ २२ ॥

गीοभूο—अदेशेऽशुचिस्थाने, अकालेऽशुचिसमये यदपात्रेभ्यो नटादिभ्यो दीयते, देशादि-सम्पत्तावपि यदसत्कृतं चरणप्रक्षालनादि-सत्कारशून्यमवज्ञातं तूंकाराद्यनादरभाषणोपेतं च यद्दानं, तत्तामसम् ॥२२॥

ॐतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥२३॥



तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥२४॥

साराοबο—तदेवं तपोयज्ञादीनां त्रैविध्यं सामान्यतो मनुष्यमात्रमधिकृत्योक्तम् । तत्र ये सात्त्विकेष्वपि मध्ये ब्रह्मवादिनस्तेषान्तु ब्रह्मनिर्द्देशपूर्व्वका एव यज्ञादयो भवन्तीत्याह-ॐ तत्सदित्येवं ब्रह्मणो निर्द्देशो नाम्ना व्यपदेशः स्मृतः शिष्टैर्दर्शितः । तत्र ओमिति सर्व्वश्रुतिषु प्रसिद्धमेव ब्रह्मणो नाम । जगत्कारणत्वेनातिप्रसिद्धेरतन्निरसनेन च प्रसिद्धेस्तदिति च, "सदेव सौम्येदमग्र आसीत्" इति श्रुतेः सदिति च । यस्मात् ॐ तत् सत् शब्दवाच्येन ब्रह्मणैव ब्राह्मणा वेदा यज्ञाश्च विहिताः कृतास्तस्मात् ओमिति ब्रह्मणो नामोदाहृत्योच्चार्य्य वर्त्तमानानां ब्रह्मवादिनां यज्ञादयः प्रवर्त्तन्ते ॥ २३-२४ ॥

गीοभूο—तदेव यज्ञ-तपो-दानानां त्रैविध्यकथनेन सात्त्विकानां तेषामुपादेयत्वं, राजसादीनां हेयत्वञ्च दर्शितम् । अथ सात्त्विकाधिकारिणां यज्ञादीनि विष्णुनामपूर्व्वकाण्येव भवन्तीत्युच्यते-ओमिति । ओमित्यादिकस्त्रिविधो ब्रह्मणो विष्णोर्निर्द्देशो नामधेयं शिष्टैः स्मृतः, "ओमित्येतद्ब्रह्मणो नेदिष्टं नाम" इति श्रुतेः ओमित्येकं नाम, "तत्त्वमसि" इति श्रुतेः तदिति द्वितीयं नाम, "सदेव सौम्य" इति श्रुतेः सदिति तृतीयं नाम उपलक्षणमिदम् । विष्णवादिनाम्नां तेन त्रिविधेन निर्द्देशेन ब्राह्मणा वेदा यज्ञाश्च पुरा चतुर्म्मुखेन विहिताः प्रकटितास्तस्मान्महाप्रभावोऽयं निर्द्देशस्तत्पूर्व्वकाणां यज्ञादीनां नाङ्गवैगुण्यं, तेन फलवैगुण्यञ्च नेति ॥२३॥

गीοभूο—यस्मादेवं तस्मादोमिति निर्द्देशमुदाहृत्योच्चार्य्यानुष्ठिता ब्रह्मवादिनां सात्त्विकानां त्रैवर्णिकानां यज्ञाद्याः क्रियाः प्रवर्त्तन्ते-अङ्गवैकल्येऽपि साङ्गतां भजन्तीति ॥२४॥

तदित्यनभिसंधाय फल यज्ञतपःक्रियाः ।
दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ॥२५॥

सारा०ब०—तदित्युदाहृत्येति पूर्व्वस्यानुषङ्गः । अनभिसन्धाय फलाभिसन्धिमकृत्वा ॥ २५ ॥

गी०भू०--तदिति - निर्द्देशमुदाहृत्य फलमनभिसन्धाय यज्ञादिक्रिया मोक्षकाङ्क्षिभिस्तैः क्रियन्ते अनुष्ठीयन्ते । निष्कामतया मुमुक्षासम्पादनान्महाप्रभावस्तच्छब्दः ॥२५॥

सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ।
प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ॥२६॥
यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते
कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥२७॥

सारा०ब०--ब्रह्मबाचकः सच्छब्दः प्रशस्तेष्वपि वर्त्तते, तस्मात् प्रशस्तमात्रे कर्म्मणि प्राकृतेऽप्राकृतेऽपि सच्छब्दः प्रयोक्तव्य इत्याशयेनाह-सद्भाव इति द्वाभ्याम् । सद्भावे ब्रह्मत्वे साधुभावे ब्रह्मबादित्वे प्रयुज्यते संगच्छत इत्यर्थः ॥ २६ ॥

सारा०ब०-यज्ञादौ स्थितिर्यज्ञादितात्पर्य्येणावस्थानमित्यर्थः । तदर्थीयं कर्म्म ब्रह्मपरिचर्य्योपयोगि यत् कर्म्म भगवन्मन्दिर-मार्ज्जनादिकम् , तदपि ॥ २७ ॥

गी०भू०—सदिति निर्द्देशः प्रशस्तेष्वर्थान्तरेषु बर्त्तते, तस्मात्त प्रशस्ते कर्म्ममात्रे स प्रयोज्य इति भावेनाह—सद्भाव इति द्वाभ्याम् । सद्भावे ब्रह्मत्वे साधुभावे च ब्रह्मज्ञत्वेऽभिधायकतया सच्छब्दः प्रयुज्यते-"सदेव सौम्यः" इत्यादौ, "सतां प्रसङ्गात्" इत्यादौ च, तथा प्रशस्ते उपनयनबिबाहादिके च माङ्गलिके कर्म्मणि सच्छब्दो युज्यते सङ्गच्छते, यज्ञादौ या तेषां स्थिति-



स्तात्पर्य्येणाबस्थितिस्तदपि सदित्युच्यते, यस्येदं नाम त्रयं, तदर्थीयं कर्म्म च तन्मन्दिरनिर्म्माण-तद्विमार्ज्जनादि सदित्यभिधीयते । अत्र त्रिबिधोऽयं निर्द्देशः स्मर्त्तव्य इति बिधिः कल्प्यते । "वषट्कर्त्तुः प्रथमं भक्षः" इत्यादाविव बचनानि स्वपूर्व्वत्वादिति न्यायाद्यज्ञदानादिसंयोगाच्चास्य तद्वैगुण्यमेव फलम्-- "प्रमादात कुर्व्वतां कर्म्म प्रच्यवेताध्वरेषु यत । स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥" इति स्मरणाच्च ॥२६-२७॥

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥२८॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्व्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्ज्जुनसंबादे श्रद्धात्रयबिभागयोगो नाम सप्तदशोऽध्यायः ।



सारा०ब०—सत् कर्म्म श्रुतम् , तथासत्त कर्म्म किमित्यपेक्षायामाह-अश्रद्धयेति । हुतं हवनं, दत्तं दानं, तपस्तप्तं कृतं यदन्यच्चापि कर्म्म कृतं तत् सर्व्वमसदिति हुतमप्यहुतमेव दत्तमप्यदत्तमेव तपोऽप्यतप्तमेव कृतमप्यकृतमेव , यतस्तत् न प्रेत्य न परलोके फलति नापीहलोके फलति ॥ २८ ॥

उक्तेषु बिविधेष्वेव सात्त्विकं श्रद्धया कृतम् ।
यत् स्यात्तदेव मोक्षार्हमित्यध्यायार्थ ईरितः ॥
इति सारार्थबर्षिण्यां हर्षिण्यां भक्तचेतसाम् ।
गीतास्वयं सप्तदशः सङ्गतः सङ्गतः सताम् ॥

गी०भू०—अथ सात्त्विकया श्रद्धया सर्व्वेषु कर्म्मसु प्रबर्त्ति-

तव्यम्, तया बिना कृतं सर्व्वं व्यर्थमिति निन्दति–अश्रद्धयेति। हुतं होमो दत्तं दानं, तप्तमनुष्ठितं यच्चान्यदपि स्तुतिप्रणत्यादि-कर्म्म कृतं, तत् सर्व्वमसन्निन्द्यमित्युच्यते। कुत इत्यत्राह-न चेति। हेतौ च-शब्दो यतोऽश्रद्धया कृतं, तत् प्रेत्य परलोके न फलति बिगुणात्तस्मात् पूर्व्वानुत्पत्तेर्नापीह लोके कीर्त्तिः, सद्भि-र्निन्दितत्वात् ॥२८॥

श्रद्धां स्वभावजां हित्वा शास्त्रजां तां समाश्रितः।
निःश्रेयसाधिकारी स्यादिति सप्तदशी स्थितिः॥

इति श्रीमद्भगवद्गीतोपनिषद्भाष्ये सप्तदशोऽध्यायः।

# अष्टादशोऽध्यायः

अर्जुन उवाच –

संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम्।
त्यागस्य च हृषीकेश पृथक्केशिनिषूदन ॥१॥

साराःब०–सन्न्यासज्ञानकर्म्मादेस्त्रैविध्यं मुक्तिनिर्णयः।
गुह्यसारतमा भक्तिरित्यष्टादश उच्यते ॥

अनन्तराध्याये "तदित्यनभिसन्धाय फलं यज्ञतपःक्रियाः। दानक्रियाश्च बिविधाः क्रियन्ते मोक्षकाङ्क्षिभिः॥" इत्यत्र भगवद्वाक्ये मोक्षकाङ्क्षिशब्देन सन्न्यासिन एवोच्यन्ते, अन्ये वा यद्यन्य एव ते, तर्हि "सर्व्वकर्म्मफलत्यागं ततः कुरु यतात्मवान्" इति त्वदुक्तानां सर्व्वकर्म्मफलत्यागिनां तेषां स त्यागः कः? सन्न्यासिनाञ्च को वा सन्न्यासः? इति बिवेकतो जिज्ञासुराह–सन्न्यासस्येति। पृथगिति यदि सन्न्यासत्याग-शब्दौ भिन्नार्थौ तदा सन्न्यासस्य त्यागस्य च तत्त्वं पृथग्वे-



दितुमिच्छामि। यदि त्वेकार्थौ तावपि त्वन्मते वा अन्यमते वा तयोरैक्यार्थमर्थादेकार्थत्वमिति पृथग्वेदितुमिच्छामि। हे हृषीकेशेति मद्बुद्धेः प्रवर्त्तकत्वात् त्वमेव इमं सन्देह-मुत्थापयसि। 'केशिनिसूदनः' इति तञ्च सन्देहं त्वमेव केशिन-मिव बिदारयसीति भावः। 'महाबाहो' इति त्वं महाबाहुबला-न्वितोऽहं किञ्चिद्बाहुबलान्वित इत्येतदंशेनैव मया सह सख्यं तव, न तु सार्व्वज्ञाचार्यादिभिरंशैरतस्त्वद्दत्त-किञ्चित्सख्यभावादेव प्रश्ने मम निःशङ्कतेति भावः॥ १ ॥

गी०भू०–-गीतार्थानिह संगृह्णन् हरिरष्टादशेऽखिलान्।
भक्तेस्तत्र प्रपत्तेश्च सोऽब्रवीदतिगोप्यताम्॥

"सर्व्वकर्म्माणि मनसा संन्यस्यास्ते सुखं बशी" इत्यादौ सन्न्यास-शब्देन किमुक्तं "त्यक्त्वा कर्म्मफलासङ्गम्" इत्यादौ त्याग-शब्देन च किमुक्तं भगवता तत्र सन्दिहानोऽर्जुनः पृच्छति–सन्न्यासस्येति। 'सन्न्यास'-'त्याग'-शब्दौ शैल-तरु-शब्दाविव बिजातीयार्थौ किंवा कुरु-पाण्डव-शब्दाविव सजा-तीयार्थौ? यद्याद्यस्तर्हि सन्न्यासस्य त्यागस्य च तत्त्वं पृथग्वेदितु-मिच्छामि; यद्यन्तस्तर्हि तत्रावान्तरोपाधिमात्रं भेदकं भावि, तच्च बेदितुमिच्छामि। हे महाबाहो कृष्ण, हृषीकेशेति धीवृत्तिप्रेरकत्वा-त्त्वमेव मत्सन्देहमुत्पादयसि; केशिनिसूदनेति त्वं मत्सन्देहं केशि-नमिव बिनाशयेति ॥१॥

श्रीभगवानुवाच—

काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः।
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥२॥

सारा०ब०—प्रथमं प्राच्यं मतमाश्रित्य सन्न्यासत्यागशब्द-योर्भिन्नजातीयार्थत्वमाह—काम्यानामिति। "पुत्रकामो यजेत"

"स्वर्गकामो यजेत" इत्येवं कामोपबन्धेन बिहितानां काम्यानां कर्म्मणां न्यासं स्वरूपेणैव त्यागं सन्न्यासं बिदुर्न तु नित्यानामपि सन्ध्योपास्त्यादीनामिति भावः। सर्व्वेषां काम्यानां नित्यानामपि कर्म्मणां फलत्यागमेब, न तु स्वरूपतस्त्यागं केषामपीति भावः। नित्यानामपि कर्म्मणां फलं "कर्म्मणा पितृलोकः" इति, "धर्म्मेण पापमपनुदति" इत्याद्याः श्रुतयः प्रतिपादयन्त्येवेत्यतस्त्यागे फलाभिसन्धिरहितं सर्व्वकर्म्मकरणम्। सन्न्यासे तु फलाभिसन्धिरहितं नित्यकर्म्मकरणम्, काम्यकर्म्मणां तु स्वरूपेणैब त्याग इति भेदो ज्ञेयः॥ २॥

गी०भू०—एवं पृष्टो भगवानुवाच-काम्यानामिति। "पुत्रकामो यजेत स्वर्गकामो यजेत" इत्येवं कामोपनिबन्धेन बिहितानां पुत्रेष्टिज्योतिष्टोमादीनां कर्म्मणां न्यासं स्वरूपेण त्यागं कबयः पण्डिताः सन्न्यासं विदुर्न तु नित्यानामग्निहोत्रादीनामित्यर्थः; तेषु बिचक्षणास्तु सर्व्वेषां काम्यानां नित्यानाञ्च कर्म्मणां फलत्यागमेव, न तु स्वरूपतस्त्यागं सन्न्यासलक्षणं त्यागं प्राहुः। नित्यकर्म्मणां च फलमस्ति—"कर्म्मणा पितृलोको धर्म्मेण पापमपनुदति" इत्यादि-श्रवणात्। यद्यपि "अहरहः सन्ध्यामुपासीत", "याबज्जीबनमग्निहोत्रं जुहोति" इत्यादौ "पुत्रकामो यजेत" इत्यादाबिब फलबिशेषो न श्रुतस्तथापि "विश्वजिता यजेत" इत्यादाबिब बिधिः किञ्चित् फलमाक्षिपेदेव; इतरथा पुरुषप्रबृत्त्यनुपपत्तेर्दुष्परिहरतापत्तिः। तथा च काम्यकर्म्मणां स्वरूपतस्त्यागो, नित्यकर्म्मणां तु फलत्यागः सन्न्यास-शब्दार्थः; सर्व्वेषां कर्म्मणां फलेच्छां त्यक्त्वानुष्ठानं खलु त्याग--शब्दार्थः। पूर्व्वोक्तरीत्या ज्ञानोदयफलस्य सत्त्वादप्रवृत्तेर्दुष्परिहरत्वं प्रत्युक्तम्॥२॥



त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः।
यज्ञदानतपः कर्म न त्याज्यमिति चापरे॥३॥

सारा०ब०—त्यागे पुनरपि मतभेदमुपक्षिपति—त्याज्यमिति। दोषबत् हिंसादिदोषबत्त्वात् कर्म्म स्वरूपत एब त्याज्यमित्येके सांख्याः। परे मीमांसका यज्ञादिकं कर्म्मशास्त्रे बिहितत्वान्न त्याज्यमित्याहुः॥ ३॥

गी०भू०—त्यागे पुनरपि मतभेदमाह—त्याज्यमिति। एके मनीषिणो "न हिंस्यात् सर्व्वा भूतानि" इति श्रुतिदर्शिनः कापिलाः कर्म्मदोषबत् पशुहिंसादि दोषयुक्तं भवत्यतस्त्याज्यं स्वरूपतो हेयमित्याहुः, "अग्नीषोमीयं पशुमालभेत" इति श्रुतिस्तु हिंसायाः क्रत्वङ्गत्वमाह, त्वनर्थहेतुत्वं तस्या निबारयति। तथा च द्रव्यसाध्यत्वेन हिंसायाः सम्भवात्, सर्व्वं कर्म्म त्याज्यमिति। अपरे जैमिनीयास्तु यज्ञादिकर्म्म न त्याज्यं, तस्य वेदबिहितत्वेन निर्द्दोषत्वादित्याहुः—यद्यपि हिंसानुग्रहात्मकं कर्म्म, तथापि तस्य वेदेन धर्म्मत्वाभिधानान्न दोषबत्त्वमतः कार्य्यमेवेत्यर्थः। "न हिंस्यात्" इति सामान्यतो निषेधस्तु क्रतोरन्यत्र तस्याः पापतामाहेति न किञ्चिदबद्यम्॥३॥

निश्चयं शृणु मे तत्र त्यागे भरतसत्तम।
त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः॥४॥

सारा०ब०—स्वमतमाह—निश्चयमिति। त्रिबिधः—सात्त्विको राजसस्तामसश्चेति। अत्र त्यागस्य त्रैबिध्यमुत्क्रम्य "नियतस्य तु सन्न्यासः कर्म्मणो नोपपद्यते। मोहात्तस्य परित्यागस्तामसः परिकीर्त्तितः॥" इति तस्य एब तामसभेदैः सन्न्यासशब्दप्रयोगाद् भगवन्मते त्याग-सन्न्यासशब्दयोरैक्यार्थमेबेत्यवगम्यते॥ ४॥

गी०भू०—एवं मतभेदमुपबर्ण्य स्वमतमाह—निश्चयमिति।

मतभेदग्रस्ते त्यागे मे परमेश्वरस्य सर्व्वज्ञस्य निश्चयं शृणु। ननु त्यागस्य ख्यातत्वात्तत्र श्रोतव्यं किमस्ति ? तत्राह-त्यागो हीति। हि यतस्त्यागस्तामसादि-भेदेन विज्ञैस्त्रिविधः संप्रकीर्त्तितो विविच्योक्तः। तथा च दुर्बोधोऽसो श्रोतव्य इति त्यागत्रैविध्यम्—'नियतस्य तु' इत्यादिभिरग्रे वाच्यम् ॥४॥

यज्ञदानतपः कर्म न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥५॥

सारा०ब०—काम्यानामपि मध्ये भगवन्मते सात्त्विकानि यज्ञदानतपांसि फलाकाङ्क्षारहितैः कर्त्तव्यानीत्याह-यज्ञादिकं कर्त्तव्यमेव। तत्र हेतुः—पावनानीति चित्तशुद्धिकरत्वादित्यर्थः ॥ ५ ॥

गी०भू०—प्रथमं तस्मिन् स्वनिश्चयमाह-यज्ञेति द्वाभ्याम्। यज्ञादीनि मनीषिणां कार्य्याण्येव न त्याज्यानि, यदमूनि विषतन्तुवदन्तरभ्युदितज्ञानद्वारा पावनानि संसृतिदोषविनाशकानि भवन्ति ॥५॥

एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥६॥

सारा०ब०—येन प्रकारेण कृतान्येतानि पावनानि भवन्ति तं प्रकारं दर्शयति-एतान्यपीति। सङ्गं कर्त्तृत्वाभिनिवेशं फलाभिसन्धिश्च; फलाभिसन्धि-कर्त्तृत्वाभिनिवेशयोस्त्याग एव त्यागः सन्न्यासश्चोच्यत इति भावः ॥ ६ ॥

गी०भू०—यज्ञादीनां पावनताप्रकारमाह-एतान्यपीति। सङ्गं कर्त्तृत्वाभिनिवेशं फलानि च प्रतिपदोक्तानि पितृलोकादीनि च सर्व्वाणि त्यक्त्वा केवलमीश्वरार्चनधिया कर्त्तव्यानीति मे मय।



निश्चितमत उत्तममिदं मतम। कर्त्तृत्वाभिनिवेशत्यागस्यापि प्रवेशात् पार्थसारथेर्मतं वरीयः ॥६॥

नियतस्य तु संन्यासः कर्मणो नोपपद्यते ।
मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥७॥

सारा०ब०—प्रक्रान्तस्य त्रिविधत्यागस्य तामसं भेदमाह-नियतस्य नित्यस्य। मोहात् शास्त्रतात्पर्य्याज्ञानात्। सन्न्यासी काम्यकर्म्मण्यावश्यकत्वाभावात् परित्यजतु नाम, नित्यस्य तु कर्म्मणस्त्यागो नोपपद्यत इति तु-शब्दार्थः। मोहादज्ञानात्, तामस इति तामसत्यागस्य फलमज्ञानप्राप्तिरेव, न त्वभीप्सितज्ञानप्राप्तिरिति भावः ॥ ७ ॥

गी०भू०—प्रतिज्ञातं त्यागत्रैविध्यमाह-नियतस्येति त्रिभिः। काम्यस्य कर्म्मणो बन्धकत्वात्तत्यागो युक्तः। नियतस्य नित्यनैमित्तिकस्य महायज्ञादेः कर्म्मणः सन्न्यासस्त्यागो नोपपद्यते। आत्मोद्देशाद्विशीर्णादिवदन्तर्गतज्ञानस्य तस्य मोचकत्वाद्देहयात्रासाधकत्वाच्च तत्त्यागो न युक्तः। तेन हि देवताभगवद्विभूतिरर्च्चितां तच्छेषैः पूतैः सिद्धा देहयात्रा तत्त्वज्ञानाय सत्त्वज्ञानाय संपद्यते। वैपरीत्ये पूर्व्वमभिहितं 'नियतं कुरु कर्म्म त्वम्' इत्यादिभिस्तृतीये तस्यापि मोहाद्बन्धकमिदमित्यज्ञानात् परितः स्वरूपेण त्यागस्तामसो भवति—मोहस्य तमोधर्म्मत्वात्। ७॥

दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् ।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥८॥

सारा०ब०—दुःखमित्येवेति। यद्यपि नित्यकर्म्मणामावश्यकमेव तत्करणे गुण एव, न तु दोष इति जानाम्येव, तदपि तैः शरीरं मया कथं वृथा क्लेशयितव्यमिति भावः। त्यागफलं ज्ञानं न लभेत ॥ ८ ॥

गी०भू०--निष्कामतयानुष्ठितं बिहितं कर्म्म मुक्तिहेतुरिति जानन्नपि द्रव्योपार्ज्जनप्रातःस्नानादिना दुःखरूपमिति कायक्लेश-भयाच्चैतन्मुमुक्षुरपि त्यजेत। स त्यागो राजसः-दुःखस्य रजो-धर्म्मत्वात्। तं त्यागं कृत्वापि जनस्तस्य फलं ज्ञाननिष्ठां न लभते ॥८॥

कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ।
सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥९॥

सारा०ब०--कार्य्यमवश्यकर्त्तव्यमिति बुद्ध्या नियतं नित्यं कर्म्म, सात्त्विक इति त्यागात्त्यागफलं ज्ञानं स लभेतैवेति भावः ॥ ९ ॥

गी०भू०--कार्य्यमवश्यकर्त्तव्यतया बिहितं कर्म्म नियतं यथा भवति, तथा सङ्गं कर्त्तृत्वाभिनिवेशं फलं च निखिलं त्यक्त्वा क्रियत इति यत् स त्यागः सात्त्विकस्तादृशज्ञानस्य सत्त्वधर्म्मत्वात् ॥९॥

न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते ।
त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥१०॥

सारा०ब०--एवम्भूतसात्त्विकत्यागपरिनिष्ठितस्य लक्षणमाह--न द्वेष्टीति। अकुशलमसुखदं शीते प्रातःस्नानादिकं न द्वेष्टि, कुशले सुखग्रीष्मस्नानादौ ॥ १० ॥

गी०भू०--सात्त्विकत्यागिनो लक्षणमाह--द्वेष्टीति। अकु-शलं दुःखदं हेमन्तप्रातःस्नानादि न द्वेष्टि, कुशले सुखदे निदा-घमध्याह्ने स्नानादौ न सज्जते; यतः सत्त्व-समाविष्टोऽतिधारो मेधावी स्थिरधीश्छिन्नो बिहितानि कर्म्माणि क्लेशेनानुष्ठितानि ज्ञानं जनयेयुर्न वेत्येवंलक्षणः संशयो येन सः। ईदृशः सात्त्विक-त्यागी बोध्यः ॥१०॥



न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥११॥

सारा०ब०—इतोऽपि शास्त्रीयं कर्म्म न त्याज्यमित्याह-न हीति। त्यक्तुं न शक्यं न शक्यानि, तदुक्तम्-'न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्म्मकृत्' इति ॥ ११ ॥

गी०भू०—नन्वीदृशात् फलत्यागात् स्वरूपतः कर्म्मत्यागो बरीयान् बिक्षेपाभावेन ज्ञाननिष्ठा साधकत्वादिति चेत्तत्राह-न हीति। देहभृता कर्म्माण्यशेषतस्त्यक्तुं न हि शक्यं न शक्यानि; यदुक्तं-'न हि कश्चित् क्षणमपि' इत्यादि; तस्माद्यः कर्म्माणि कुर्वन्नेव तत्फलत्यागी, स एव त्यागीत्युच्यते। तथा च संनिष्ठो-ऽधिकारी कर्त्तृत्वाभिनिवेशफलेच्छा-शून्यो यथाशक्ति सर्व्वाणि कर्म्माणि ज्ञानार्थी सन् कुर्य्यादिति पार्थसारथेर्मतम् ॥११॥

अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।
भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥१२॥

सारा०ब०—एवम्भूतत्यागाभावे दोषमाह-अनिष्टं नरक-दुःखमिष्टं स्वर्गसुखं मिश्रं मनुष्यजन्मनि सुखदुःखमत्यागिना-मेवम्भूत-त्यागरहितानामेव भवति, प्रेत्य परलोके ॥ १२ ॥

गी०भू०—ईदृशत्यागाभावे दोषमाह-अनिष्टमिति। अनिष्टं नारकित्वम, इष्टं स्वर्गित्वम्, मिश्रं मनुष्यत्वम्, दुःखसुख-योगीति त्रिविधं कर्म्मफलम्। अत्यागिनामुक्तत्यागरहितानां प्रेत्य परकाले भवति, न तु सन्न्यासिनामुक्तत्यागवताम, तेषां तु कर्म्मान्तर्गतेन ज्ञानेन मोक्षो भवतीति त्यागफलमुक्तम ॥१२॥

पञ्चैतानि महाबाहो कारणानि निबोध मे ।
सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥१३॥

सारा०ब०—ननु कर्म्म कुर्व्वतः कर्म्मफलं कथं न भवेदित्याशङ्क्य निरहङ्कारत्वे सति कर्म्मलोपो नास्तीत्युपपादयितुमाह—पञ्चैतानीति पञ्चभिः। सर्व्वकर्म्मणां सिद्धये निष्पत्तय इमानि पञ्चकारणानि मे मम बचनान्निबोध जानीहि—सम्यक् परमात्मानं ख्याति कथयतीति संख्यमेब सांख्यं बेदान्तशास्त्रं तस्मिन्,-कीदृशे-कृतं कर्म्म तस्यान्तो नाशो यस्मात्तस्मिन प्रोक्तानि ॥ १३ ॥

गी०भू०—ननु कर्म्माणि कुर्व्वतां तत्फलानि कुतो न स्युरिति चेत् स्वस्मिन् कर्त्तृत्वाभिनिवेशत्यागेन परमेश्वरे मुख्यकर्त्तृत्वनिश्चयेन भवन्तीत्याशयेनाह-पञ्चैतानीति पञ्चभिः। हे महाबाहो! सर्व्वकर्म्मणां सिद्धये निष्पत्तये एतानि पञ्चकारणानि मे मत्तो निबोध जानीहि। प्रमाणमाह—सांख्य इति। सांख्यं ज्ञानं तत्प्रतिपादकं वेदान्तशास्त्रं सांख्यं तस्मिन्, कीदृशीत्याह—कृतान्ते कृतनिर्णये, सर्व्वेषां कर्म्महेतूनां प्रवर्त्तकः परमात्मेति निर्णयकारिणीत्यर्थः। अन्तर्य्यामि-ब्रह्मणे विदितमेतत्, इहापि 'सर्व्वस्य चाहं हृदि' इत्याद्युक्तं बक्ष्यते च, 'ईश्वरः सर्व्वभूतानाम्' इत्यादि ॥१३॥

**अधिष्ठानं तथा कर्ता करणं च पृथग्विधम्।**
**विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥१४॥**

सारा०ब०—तान्येब गणयति-अधिष्ठानं शरीरम, कर्त्ता चिज्जडग्रन्थिरहङ्कारः, करणं चक्षुःश्रोत्रादि, पृथग्विधमनेकप्रकारम्, पृथक् चेष्टा प्राणापानादीनां पृथग्व्यापाराः, दैवं सर्व्वप्रेरकोऽन्तर्य्यामी च ॥ १४ ॥

गी०भू०—तानि गणयति-अधीति। अधिष्ठीयते जीवेनेत्यधिष्ठानं शरीरम्, कर्त्ता जीवः, अस्य ज्ञातृत्वकर्त्तृत्वे श्रुतिराह—



"एष हि द्रष्टा स्रष्टा" इत्यादिना, सूत्रकारश्च—"ज्ञोऽत एवेति कर्त्ता शास्त्रार्थवत्त्वात्" इत्यादि च। करणं श्रोत्रादिसमनस्कम्, पृथग्विधं कर्म्मनिष्पत्तौ पृथग्व्यापारम्, बिबिधा च पृथक् चेष्टा प्राणापानादीनां नानाबिधा व्यापाराः, दैवञ्चेत्यत्र कर्म्मनिष्पादके हेतुप्रचये दैवं सर्व्वाराध्यं परं ब्रह्म पञ्चमम्। कर्म्मनिष्पत्तावन्तर्यामी हरिर्मुख्यो हेतुरित्यर्थः। देहेन्द्रियप्राणजीवोपकरणोऽसौ कर्म्मप्रबर्त्तक इति निश्चयवतां कर्म्म तत्फलेषु कर्त्तृत्वाभिनिवेशस्पृहा-विरहितानां कर्म्माणि न बन्धकानीति भावः। ननु जीवस्य कर्त्तृत्वे परेशायत्ते सति तस्य कर्म्म स्वनियोज्यत्वापत्तिः, काष्ठादितुल्यत्वात्? बिधिनिषेधशास्त्राणि च व्यर्थानि स्युः? स्वधिया प्रबर्त्तितुं च शक्तो नियोज्यो दृष्टः? उच्यते—परेशेन दत्तैर्देहेन्द्रियादिभिस्तेनैवाहितशक्तिभिस्तदाधारभूतो जीवस्तदाहित-शक्तिकः सन् कर्म्मसिद्धये स्वेच्छयैव देहेन्द्रियादिकमधितिष्ठति। परेशस्तु तत्सर्व्वान्तःस्थस्तस्मिन्ननुमतिं ददानस्तं प्रेरयतीति जीवस्य स्वधिया प्रवृत्ति-निवृत्तिमत्त्वमस्तीति न किञ्चिच्चोद्यम्। एवमेव सूत्रकारो निर्णीतवान्—"परात्तु तच्छ्रुतेः" इत्यादिना। ननु मुक्तस्य जीवस्य कर्त्तृत्वं न स्यात्, तस्य देहेन्द्रियप्राणानां बिगमादिति चेन्न-तदा संकल्पसिद्धानां दिव्यानां तेषां सत्त्वात् ॥१४॥

**शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः।**
**न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥१५॥**

सारा०ब०—शरीरादिभिरिति शारीरं बाचिकं मानसं चेति कर्म्म त्रिविधम्, तच्च सर्व्वं द्विबिधम्-न्याय्यं धर्म्म्यं, बिपरीतमन्याय्यमधर्म्म्यं, तस्य सर्व्वस्यापि कर्म्मण एते पञ्चहेतवः ॥१५

गी०भू०—शरीरेति – न्याय्यं शास्त्रीयं, बिपरीतमशास्त्रीयम् ॥१५

तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥१६॥

सारा०ब०—ततः किमत आह-तत्र सर्व्वस्मिन् कर्म्मणि पञ्चैव हेतव इत्येवं सति केवलं वस्तुतो निःसङ्गमेवात्मानं जीवं यः कर्त्तारं पश्यति, सोऽकृतबुद्धित्वादसंस्कृतबुद्धित्वाद्दुर्म्मति नैव पश्यति सोऽज्ञानी, अन्ध एवोच्यत इति भावः ॥ १६ ॥

गी०भू०—ततः किमत आह-तत्रेति । एवं सति जीवस्य कर्त्तृत्वे परेशानुमतिपूर्व्वके तद्दत्तदेहादिसापेक्षे च सति, तत्र कर्म्मणि केवलमेवात्मानं जीवमेव यः कर्त्तारं पश्यति, स दुर्म्मतिरकृतबुद्धित्वादलब्धज्ञानत्वान्न पश्यति यथान्धः ॥१६॥

यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वापि स इमाँल्लोकान्न हन्ति न निबध्यते ॥१७॥

सारा०ब०—कस्तर्हि सुमतिश्चक्षुष्मानित्यत आह-यस्येति-अहङ्कृतोऽहङ्कारस्य भावः स्वभावः कर्त्तृत्वाभिनिवेशो यस्य नास्त्यतएव यस्य बुद्धिर्न लिप्यते इष्टानिष्टबुद्ध्या कर्म्मसु नासज्जति, स हि कर्म्मफलं न प्राप्नोतीति किं वक्तव्यम् ? स हि कर्म्म भद्राभद्रं कुर्व्वन्नपि नैव करोतीत्याह-हत्वापीति । स इमान् सर्व्वानपि प्राणिनो लोकदृष्ट्या हत्वापि स्वदृष्ट्या नैव हन्ति, निरभिसन्धित्वादिति भावः, अतो न बध्यते कर्म्मफलं न प्राप्नोतीति ॥ १७ ॥

गी०भू०—कस्तर्हि चक्षुष्मान् सुमतिस्तत्राह-यस्येति । यस्य पुरुषस्य मनोवृत्तिलक्षणो भावो नाहंकृतः स्वकर्त्तृत्वे परेशायत्तोऽनुसन्धिते सति कर्म्माण्यहमेव करोमीत्यभिमानकृतो न भवेत् । यस्य च बुद्धिर्नलिप्यते कर्म्मफलस्पृहया, स इमाँल्लोकान्न केवलं



भीष्मादीन् हत्वापि न हन्ति, न च तेन सर्व्वलोकहननेन कर्म्मणा निबध्यते लिप्यते ।१७॥

ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ।
करणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः ॥१८॥

सारा०ब०—तदेवं भगवन्मत उक्तलक्षणः सात्त्विकस्त्याग एव सन्न्यासो ज्ञानिनां, भक्तानान्तु कर्म्मयोगस्य स्वरूपेणैव त्यागोऽवगम्यते, यदुक्तमेकादशे भगवतैव-"आज्ञायैव गुणान् दोषान् मयादिष्टानपि स्वकान् । धर्म्मान् संत्यज्य यः सर्व्वान् मां भजेत् स च सत्तमः ॥" इत्यस्यार्थः स्वामिचरणैर्व्याख्यातो यथा-"मया वेदरूपेणादिष्टानपि स्वधर्म्मान् संत्यज्य यो मां भजेत् स च सत्तम इति किमज्ञानतो नास्तिक्याद्वा ? न, धर्म्माचरणे सत्वशुद्ध्यादीन् गुणान् विपक्षे दोषान् प्रत्यवायांश्चाज्ञाय ज्ञात्वापि मद्ध्यानविक्षेपकतया मद्भक्त्यैव सर्व्वं भविष्यतीति दृढ़निश्चयेनैव धर्म्मान् संत्यज्य" इति । अत्र धर्म्मान् धर्म्मफलानि संत्यज्येति तु व्याख्या न घटते, न हि धर्म्मफलत्यागे कश्चिदत्र प्रत्यवायो भवेदित्यवधेयम् । अयं भावो भगवद्वाक्यानां तद्व्याख्यातॄणाञ्च-ज्ञानं हि चित्तशुद्धिमवश्यमेवापेक्षते, निष्काकर्म्मभिश्चित्तशुद्धितारतम्ये वृत्त एव ज्ञानोदयतारतम्यं भवेन्नान्यथा । अतएव सम्यग् ज्ञानोदयसिद्ध्यर्थं सन्न्यासिभिरपि निष्कामकर्म्म कर्त्तव्यमेव, कर्म्मभिः सम्यकृतया चित्तशुद्धौ वृत्तायां तु तैरपि कर्म्म न कर्त्तव्यमेव । यदुक्तं -"आरुरुक्षोर्म्मुनेर्योगं कर्म्म कारणमुच्यते । योगारुढस्य तस्यैव शमः कारणमुच्यते ॥" इति, "यस्त्वात्मरतिरेव स्यादात्मतृप्तिश्च मानवः । आत्मन्येव च संतुष्टस्तस्य कार्य्यं न विद्यते ॥" इति । भक्तिस्तु परमा स्वतन्त्रा महाप्रबला चित्तशुद्धिं नैवापेक्षते यदुक्तं

-"बिक्रीडितं व्रजबधूभिरिदञ्च बिष्णोः श्रद्धान्वितोऽनुश्रृणुयात्" इत्यादौ "भक्तिं परां भगवति प्रतिलभ्य कामं हृद्रोगमाश्वपहिनोत्यचिरेण धीरः ॥" इति। अत्र स्वात्मप्रत्ययेन हृद्रोगबत्त्वे बाधिकारिणि परमाया भक्तेरपि प्रथममेव प्रवेशस्ततस्तत्रैब कामादीनामपगमश्च, तथा "प्रबिष्टः कर्णरन्ध्रेण स्वानां भावसरोरुहम्। धुनाति शमलं कृष्णः सलिलस्य यथा शरत्॥" इति च इत्यतो भक्त्यैब यदि तादृशी चित्तशुद्धिः स्यात् तदा भक्तेः कथं कर्म्म कर्त्तव्यमिति। अथ प्रकृतमनुसरामः- किञ्च न केबलं देहादिव्यतिरिक्तस्यात्मनो ज्ञानमेब ज्ञानं तथात्मतत्त्वमपि ज्ञेयं, तादृश-ज्ञानाश्रय एब ज्ञानी, किन्त्वेतत्त्रिके कर्म्मसम्बन्धो बर्त्तते, तदपि सन्न्यासिभिर्ज्ञेयमित्याह-ज्ञानमिति। अत्र चोदना-शब्देन बिधिरुच्यते, यदुक्तं भट्टैः-"चोदना चोपदेशश्च बिधिश्चैकार्थबाचिनः" इति। उक्तं श्लोकार्द्धं स्वयमेव व्याचष्टे-करणमिति यज्ज्ञानं तत् करण-कारकम्, ज्ञायतेऽनेनेति ज्ञानमिति व्युत्पत्तेः, यज्ज्ञेयं जीबात्मतत्त्वं, तदेब कर्म्म-कारकम्, यस्तस्य परिज्ञाता स 'कर्त्ता' इति त्रिबिधः, 'करणं' 'कर्म्म' 'कर्त्ता' इति त्रिबिधं कारकमित्यर्थः। कर्म्मसंग्रहः-कर्म्मणा निष्कामकर्म्मानुष्ठानेनैव संगृह्यत इति कर्म्मचोदना-पदव्याख्या। ज्ञानत्वं ज्ञेयत्वं ज्ञातृत्वं चेतत्त्रयं निष्कामकर्म्मानुष्ठानमूलकमिति भावः ॥ १८ ॥

गी०भू०—ज्ञानकाण्डबत् कर्म्मकाण्डेऽपि ज्ञानादित्रयमस्ति, तच्च सनिष्ठेन कर्म्मठेन बोध्यमिति उपदिशति-ज्ञानमिति। ज्ञानं ज्ञेयं परिज्ञातेत्येवंत्रिकयुक्ता कर्म्मचोदना ज्योतिष्टोमादिकर्म्मबिधिः- "चोदना चोपदेशश्च बिधिश्चैकार्थबाचिन" इत्यभियुक्तोक्तेः। तत्त्रिकं स्वयमेव व्याख्याति-करणमिति। यज्ज्ञानं, तत् करणं 'ज्ञायतेऽनेन' इति निरुक्तेः करणकारकमित्यर्थः, यज्ज्ञेयं कर्त्तव्यं ज्योतिष्टोमादि तत् कर्म्मकारकम्; यस्तु तस्य परितोऽनुष्ठानेन ज्ञाता, स कर्त्तेति कर्त्तृकारकम्। एवं कर्म्मसंग्रहो ज्योतिष्टोमादि कर्म्मबिधिस्त्रिबिधः करणादिकारकत्रयसाध्यश्चोदना-संग्रहशब्दयोरैक्यार्थः ॥१८॥



ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः।
प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि ॥१९॥

गी०भू०—ज्ञानमिति - गुणसंख्याने गुणनिरूपके शास्त्रे चतुर्द्दशे 'तत्र सत्त्वं निर्म्मलत्वात्' इत्यादिना गुणानां बन्धकता-प्रकारः; सप्तदशे 'यजन्ते सात्त्विका देबान्' इत्यादिना गुणकृतस्वभावभेदश्चोक्तः। इह तु गुणसंज्ञानां ज्ञानादीनां त्रैविध्यमुच्यत इति बोध्यम् ॥१९॥

सर्वभूतेषु येनैकं भावमव्ययमीक्षते।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥२०॥

सारा०ब०—सात्त्विकं ज्ञानमाह-सर्व्वभूतेष्विति। एकं भावमेकमेव जीबात्मानं नानाबिधफलभोगार्थं क्रमेण सर्व्वभूतेषु मनुष्यदेबतिर्य्यगादिषु बर्त्तमानमव्ययं नश्वरेष्वपि तेष्वनश्वरं बिभक्तेषु परस्परं बिभिन्नेष्वप्यबिभक्तमेकरूपं येन कर्म्मसम्बन्धिना ज्ञानेनेक्षते, तत् सात्त्विकं ज्ञानम् ॥ २० ॥

गी०भू०—सात्त्विकज्ञानमाह-सर्व्वेति। सर्व्वभूतेषु देवमानवादिषु देहेषु नानाकर्म्मफलभोगात् क्रमेण बर्त्तमानभावं जीवात्मानं येनैकं बीक्षते। अव्ययं नश्वरेषु तेष्वनश्वरं, बिभक्तेषु मिथोभिन्नेषु तेष्वविभक्तमेकरूपञ्च येन तं बीक्षते, तज्ज्ञानं सात्त्विकमौपनिषदबिबिक्तात्मज्ञानं तदित्यर्थः ॥२०॥

पृथक्त्वेन तु यज्ज्ञानं नानाभावान्पृथग्विधान् ।
वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥२१॥

सारा०ब०—राजसं ज्ञानमाह–सर्व्वभूतेषु जीबात्मनः पृथक्त्वेन यज्ज्ञानमिति। देहनाश एबात्मनो नाश इत्यसुराणां मतम्। अतएब पृथक्पृथग् देहेषु पृथक् पृथगेबात्मेति, तथा शास्त्रकारणात् पृथग् बिधान् नानाभावान् नानाभिप्रायान् । आत्मा सुखदुःखाश्रय इति, सुखदुःखाद्यनाश्रय इति, जड़ इति, चेतन इति, व्यापक इति, अणुस्वरूप इति, अनेक इति–इत्यादि कल्पान् येन एक इत्यादि बेद तद्राजसम् ॥ २१ ॥

गी०भू०––राजसज्ञानमाह–पृथक्त्वेनेति। सर्व्वेषु भूतेषु देव-मनुष्यादिदेहेषु जीबात्मनः पृथक्त्वेन यज्ज्ञानं देहबिनाश एबात्मबिनाश इति यज्ज्ञानमित्यर्थः, येन च नानाबिधान् भावानभिप्रायान् वेत्ति, देह एबात्मेति, देहादन्यो देहपरिमाण आत्मेति, क्षणिकबिज्ञानमात्मेति, नित्यबिज्ञानमात्रबिभुरात्मेति, देहादन्यो नवबिशेषगुणाश्रयोऽजड़ो बिभुरात्मेत्येवं लौकायतिक-जैन-बौद्ध-मायितार्किकादिबादान् येन जानाति, तद्राजसं ज्ञानम् ॥२१॥

यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकम् ।
अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥२२॥

सारा०ब०—तामसं ज्ञानमाह–यत्तु ज्ञानमहैतुकमौत्पत्तिकमेबातएवैकस्मिन् कार्य्ये लौकिक एव स्नानभोजनपानस्त्रीसम्भोगे तत्साधने च कर्म्मणि सक्तं, न तु वैदिके कर्मणि यज्ञदानादौ। अतएबातत्त्वार्थवत् तत्र तत्त्वरूपोऽर्थः कोऽपि नास्तीत्यर्थः। अल्पं पशुनामिव यत् क्षुद्रम्, तत् तामसं ज्ञानम् । देहाद्यतिरिक्तत्वेन तत्-पदार्थज्ञानं सात्त्विकम्, नानावादप्रतिपादकं न्यायादिशास्त्रज्ञानं राजसम्, स्नानभोजनादिव्यवहारिकज्ञानं तामसमिति सङ्क्षेपः ॥ २२ ॥

गी०भू०––तामसं ज्ञानमाह–यत्त्विति । यत्तु ज्ञानमहैतुकं स्वाभाबिकं, न तु शास्त्राद्धेतोर्ज्ञातम्, अतएवैकस्मिन् लौकिके स्नान-भोजन-योषित्प्रसङ्गादौ कार्य्ये, न तु वैदिके यागदानादौ सक्तं कृत्स्नवत् पूर्णं नातोऽधिकमस्तीत्यर्थः । अतएबातत्त्वार्थवद्यत्र तत्त्वरूपोऽर्थो नास्ति, अल्पं पश्वादिसाधारण्यात्तुच्छं तल्लौकिकस्नान-भोजनादिज्ञानं तामसम् ॥२२॥

नियतं सङ्गरहितमरागद्वेषतः कृतम् ।
अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥२३॥
यत्तु कामेप्सुना कर्म साहङ्कारेण वा पुनः ।
क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥२४॥

सारा०ब०—त्रिबिधं ज्ञानमुक्त्वा त्रिविधं कर्म्माह–नियतं नित्यतया बिहितं सङ्गरहितमभिनिवेशशून्यमतएबारागद्वेषतो रागद्वेषाभ्यां बिनैव कृतमफलप्रेप्सुना फलाकाङ्क्षारहितेनैव कर्त्रा कृतं कर्म्म यत् सात्त्विकम् ॥ २३ ॥

सारा०ब०—कामेप्सुनाऽल्पाहङ्कारबतेत्यर्थः, साहङ्कारेणात्यहङ्कारवतेत्यर्थः ॥ २४ ॥

गी०भू०––अथ कर्म्मत्रैबिध्यमाह–नियतमिति त्रिभिः। नियतं स्वबर्णाश्रमबिहितम्, सङ्गरहितं कर्त्तृत्वाभिनिवेशबर्ज्जितम्, अरागद्वेषतः कृतं कीर्त्तौ रागादकीर्त्तौ द्वेषाच्च यन्न कृतं, किन्त्वीश्वराराधनतयैबाफलप्रेप्सुना फलेच्छाशून्येन यत् कर्म्म कृतं, तत् सात्त्विकम् ॥२३॥

गी०भू०—यत् कामेप्सुना फलाकाङ्क्षिणा साहङ्कारेण कर्त्तृत्वाभिनिबेशिना जनेन बहुलायसमतिक्लेशयुक्तं कर्म्म क्रियते, तद्राजसम् ॥२४॥

अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम् ।
मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥२५॥

साराःब०—अनुकर्म्मानुष्ठानानन्तरमायत्यां भाविनं बन्धं राजदस्युयमदूतादिभिर्बन्धनं क्षयं धर्म्मज्ञानाद्यपचयम्, हिंसा स्वस्य नाशश्चानपेक्ष्यापर्य्यालोच्य पौरुषं व्यवहारिकपुरुषमात्र-कर्त्तव्यं कर्म्म मोहादज्ञानादेव यदारभ्यते तत्तामसम् ॥ २५ ॥

गी०भू०—अनु कर्म्मानुष्ठानानन्तरं बन्धं राजदूतयमदूत-कृतम्, क्षयं धर्म्मादिविनाशम्, हिंसां प्राणिपीड़ाम्, पौरुषं सबलश्चानवेक्ष्य यत् कर्म्म मोहादारभ्यते, तत्तामसम् ॥२५॥

मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ।
सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते ॥२६॥

साराःब०—त्रिविधं कर्म्मोत्तम्, त्रिविधं कर्त्तारमाह-मुक्त-सङ्ग इति ॥ २६ ॥

गी०भू०—अथ कर्त्तृत्रैविध्यमाह–मुक्तेति त्रिभिः - मुक्तसङ्गः कर्त्तृत्वाभिमानवेशफलेच्छाशून्यः, अनहंवादी गर्व्वोक्तिशून्यः, धृतिरारब्धकर्म्मपूर्त्तिपर्य्यन्ताबर्ज्जनीयदुःखसहिष्णुता, उत्साहस्त-दनुष्ठानोद्यतचित्तता ताभ्यां समन्वितः, आनुषाङ्गिकस्य फलस्य सिद्धावसिद्धौ च निर्व्विकारः-सुखेन दुःखेन च रहितः, ईदृशः कर्त्ता सात्त्विकः ॥२६॥

रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।
हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥२७॥

साराःब०—रागी कर्म्मण्यासक्तः लुब्धो विषयासक्तः ॥२७॥

गी०भू०—रागी स्त्रीपुत्रादिष्वासक्तः, कर्म्मफलप्रेप्सुः पशु-पुत्रान्नस्वर्गादिष्वतिस्पृहयालुः, लुब्धः कर्म्मापेक्षितद्रव्यव्ययाक्षमः, हिंसात्मकः परान् प्रपीड्य कर्म्म कुर्व्वाणः, अशुचिः कर्म्मापेक्षित-विहितशुद्धिशून्यः कर्म्मफलसिद्धि तदसिद्ध्योर्हर्षशोकाभ्या-मन्वितः, ईदृशः कर्त्ता राजसः ॥२७॥



अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः ।
विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥२८॥

साराःब०—अयुक्तोऽनौचित्यकारी प्राकृतः प्रकृतौ स्व-स्व-भाव एव वर्त्तमानः, यदेव स्वमनसि आयाति तदेवानुतिष्ठति, न तु गुरोरपि वचः प्रमाणयतीत्यर्थः। नैष्कृतिकः परापमान-कर्त्ता। तदेवं ज्ञानिभिरुक्तलक्षणः सात्त्विक एव त्यागः कर्त्तव्यः सात्त्विकमेव कर्म्मनिष्ठं ज्ञानमाश्रयणीयं सात्त्विकमेव कर्म्म कर्त्तव्यं सात्त्विकेनैव कर्त्रा भवितव्यं,-एव एव सन्न्यासो ज्ञानिना-मिति मे ज्ञानं प्रकरणार्थनिष्कर्षः। भक्तानां तु त्रिगुणातीत-मेव ज्ञानं त्रिगुणातीतं मे कर्म्म भक्तियोगाख्यं त्रिगुणातीता एव कर्त्तारः; यदुक्तं भगवतैव श्रीमद्भागवते–'कैवल्यं सात्त्विकं ज्ञानं रजो वैकल्पिकं तु यत्। प्राकृतं तामसं ज्ञानं मन्निष्ठं नर्गुणं स्मृतम् ॥" इति, "लक्षणं भक्तियोगस्य निर्गुणस्ये-त्युदाहृतम्" इति "सात्त्विकः कारकोऽसङ्गी रागान्धो राजसः स्मृतः। तामसः स्मृतिविभ्रष्टो निर्गुणो मदपाश्रयः ॥" इति। किञ्च न केवलमेतत्त्रिकमेव भक्तिमते गुणातीतमपि तु भक्ति-सम्बन्धि सर्व्वमेव गुणातीतम्, यदुक्तं तत्रैव–"सात्त्विक्या-ध्यात्मिकी श्रद्धा कर्म्मश्रद्धा तु राजसी। तामस्यधर्म्मे या श्रद्धा मत्सेवायान्तु निर्गुणा ॥" इति, "वनन्तु सात्त्विको वासः ग्रामो राजस उच्यते। तामसं द्युतसदनं मन्निकेतन्तु निर्गुणम ॥" इति, "सात्त्विकं सुखमात्मोत्थं विषयोत्थन्तु राजसम्। तामसं मोहदैन्योत्थं निर्गुणं मदपाश्रयम् ॥" इति। तदेवं गुणातीतानां

भक्तानां भक्तिसम्बन्धीनि ज्ञानकर्म्मश्रद्धादौ स्व-सुखादीनि सर्व्वाण्येव गुणातीतानि । सात्त्विकानां ज्ञानिनां ज्ञानसम्बन्धीनि तानि सर्व्वाणि सात्त्विकान्येव, राजसानां कर्म्मिणां तानि सर्व्वाणि राजसान्येव, तामसानामुच्छृङ्खलानां तानि सर्व्वाणि तामसान्येवेति श्रीगीता-भागवतार्थदृष्ट्या ज्ञेयम् । ज्ञानिनामपि पुनरन्तिमदशायां ज्ञानसन्न्यासानन्तरमुर्व्वरितया केबलया भक्त्यैव गुणातीतत्वं चतुर्द्दशाध्याय उक्तम् ॥ २८ ॥

गी०भू०—अयुक्तोऽनौचित्यकृत्, प्राकृतः प्रकृतौ स्वभावे बर्त्तमानः स्व-प्रकृत्यनुसारेणैव, न तु शास्त्रानुसारेण कर्म्मकृदित्यर्थः, स्तब्धोऽनम्रःशठः स्वशक्तिगोपनकृत्, नैष्कृतिकः परापमानकृत, अलसः प्रारब्धे कर्म्मणि शिथिलः, बिषादी शोकाकुलः, दीर्घसूत्री दिबसैककर्त्तव्यं बर्षेणापि यो न करोति, ईदृशः कर्त्ता तामसः ॥२८॥

बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं भृणु ।
प्रोच्यमानमशेषेण पृथक्त्वेन धनञ्जय ॥२९॥

सारा०ब०—ज्ञानिभिः सर्व्वमपि बस्तु सात्त्विकमेवोपादेयमिति ज्ञापयितुं बुद्ध्यादीनामपि त्रैबिध्यमाह-बुद्धेरिति ॥२९॥

गी०भू०—एवं ज्ञानज्ञेयपरिज्ञातॄणां त्रैबिध्यमुक्त्वा बुद्धिधृत्योस्तद्वक्तुं प्रतिजानीते । बुद्धेरिति स्फुटार्थम् ॥२९॥

प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ।
बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ॥३०

सारा०ब०—भयाभये संसारासंसार-हेतुके ॥ ३० ॥

गी०भू०—तत्र बुद्धेस्त्रैबिध्यमाह-प्रवृत्तिञ्चेति त्रिभिः । या बुद्धिर्धर्म्मे प्रवृत्तिमधर्म्मान्निवृत्तिञ्च बेत्ति, यया बेत्तीति बक्तव्ये



या बेत्तीति करणे कर्त्तृत्वमुपचरितम्, कुठारश्छिनत्तीतिवत् । निष्कामं कर्म्म कार्य्यं सकामं त्वकार्य्यमिति कार्य्याकार्य्ये या वेत्ति, अशास्त्रीय-प्रवृत्तितो भयं शास्त्रीयप्रवृत्तितस्त्वभयमिति भयाभये या वेत्ति, बन्धं संसारयाथात्म्यं मोक्षं तच्छेदयाथात्म्यं च या वेत्ति सा बुद्धिः सात्त्विकी ॥३०॥

यया धर्ममधर्मं च कार्य्यं चाकार्यमेव च
अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी ॥३१॥

सारा०ब०—अयथावदसम्यक्तयेत्यर्थः ॥ ३१ ॥

गी०भू०—राजसीं बुद्धिमाह-ययेति । अयथावदसम्यक्त्वेन ॥३१

अधर्मं धर्ममिति या मन्यते तमसावृता ।
सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥३२॥

सारा०ब०—या मन्यत इति--कुठारश्छिनत्तीतिवत् यया मन्यत इत्यर्थः ॥ ३२ ॥

गी०भू—तामसीं बुद्धिमाह-अधर्म्ममिति । बिपरीतग्राहिणी बुद्धिस्तामसीत्यर्थः । सर्व्वार्थान् बिपरीतानिति साधुमसाधुमसाधुञ्च साधुं, परं तत्त्वमपरमपरञ्च तत्त्वं परमित्येवं सर्व्वानर्थान् बिपरीतान्मन्यत इत्यर्थः ॥३२॥

धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ।
योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ॥३३

सारा०ब०—धृतेस्त्रैबिध्यमाह-धृत्येति ॥ ३३ ॥

गी०भू०—धृतेस्त्रैविध्यमाह-धृत्येति त्रिभिः । यया मनःप्राणेन्द्रियाणां योगोपायभूताः क्रियाः पुरुषो धारयते, सा धृतिः सात्त्विकी । कीदृशेत्याह-योगेनेति । योगः परात्मचिन्तनं, तेना-

व्यभिचारिण्या तदन्यं बिषयमगृह्णन्त्येत्यर्थः ॥३३॥

यया तु धर्मकामार्थान्धृत्या धारयतेऽर्जुन ।
प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी ॥३४॥
यया स्वप्नं भयं शोकं विषादं मदमेव च ।
न विमुञ्चति दुर्मेधा धृतिः सा तामसी मता ॥३५॥

गी०भू०—सकामबिद्वत्प्रसङ्गेन फलाकाङ्क्षी पुरुषः, यया धर्म्मादीन् तत्साधनभूता मनःप्राणेन्द्रियक्रिया धारयते, सा धृतिः राजसी ॥३४॥

गी०भू०—यया स्वप्नादीन्न बिमुञ्चति दुर्म्मेधास्तान् धारयत्येव, सा धृतिस्तामसी। स्वप्नो निद्रा, मदो बिषयभोगजो गर्व्वः, स्वप्नादिशब्दैस्तद्धेतुभूता बिषया लक्ष्यास्तत्साधनभूता मनःप्राणेन्द्रियक्रिया यया धारयते, सा तामसी धृतिरित्यर्थः ॥३५॥

सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ।
अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति ॥३६॥

सारा०ब०—सात्त्विकं सुखमाह-सार्द्धेन-अभ्यासात् पुनरनुशीलनादेव रमते, न तु बिषयेष्विवोत्पत्त्यैव रमत इत्यर्थः। दुःखान्तं निगच्छति यस्मिन् रममाणः संसारदुःखं तरतीत्यर्थः ॥३६

गी०भू०—अथ सुखत्रैबिध्यं प्रतिजानीते-सुखं त्विदत्यर्द्धकेन। तत्र सात्त्विकं सुखमाह-अभ्यासादिति सार्द्धकेन। अभ्यासात् पुनःपुनःपरिशीलनाद्यत्र रमते, न तु बिषयेष्विबोत्पत्त्या, यस्मिन् रममाणो दुःखान्तं निगच्छति-संसारं तरति ॥३६॥

यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।
तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥३७॥



सारा०ब०—विषमिवेति-इन्द्रियमनो-निरोधो हि प्रथमं दुःखद एव भवतीति भावः ॥ ३७ ॥

गी०भू०—यच्चाग्रे प्रथमं विषमिव मनःसंयमक्लेशसत्त्वाद्धिबिक्तात्मप्रकाशाच्चातिदुःखावहमिव भवति, परिणामे समाधिपरिपाके सत्यमृतोपमं बिविक्तात्मप्रकाशात् पीयूषप्रबाहनिपातवद्भवति। यच्चात्मसम्बन्धिन्या बुद्धेः प्रसादाज्जायते, तत्सात्त्विकं सुखम्, तत्प्रसादश्च बिषयसम्बन्धमालिन्यबिनिवृत्तिः ॥३७॥

विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् ।
परिणामे विषमिव तत्सुखं राजसं स्मृतम् ॥३८॥

सारा०ब०—यदमृतोपमं परस्त्रीसम्भोगादिकम् ॥ ३८ ॥

गी०भू०—बिषयैर्युवतिरूपस्पर्शादिभिः सहेन्द्रियाणां चक्षुस्त्वगादीनां संयोगात् सम्बन्धात् यदग्रे पूर्व्वममृतोपममतिस्वादु-परिणामेऽवसाने तु निरयहेतुत्वाद्विषोपममतिदुःखावहं भवति, तद्राजसं सुखम् ॥३८॥

यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।
निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥३९॥

गी०भू०—यदग्रेऽनुभवकाले अनुबन्धे पश्चाद्विपाककाले चात्मनो मोहनं बस्तुयाथात्म्याबरकं, यच्च निद्रादिभ्य उत्तिष्ठति जायते तत्तामसं सुखम्। आलस्यमिन्द्रियव्यापारमान्द्यम्, प्रमादः कार्य्याकार्य्यबिधानाभावः ॥३९॥

न तदस्ति पृथिव्यां दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥४०॥

सारा०ब०—अनुक्तमपि संगृह्णन् प्रकरणार्थमुपसंहरति-नेति।

तत् सत्त्वं प्राणिजातमन्यच्च वस्तुमात्रं क्वापि नास्ति यदेभिः प्रकृतिजैस्त्रिभिर्गुणैर्मुक्तं रहितं स्यादतः सर्व्वमेव वस्तुजातं त्रिगुणात्मकं, तत्र सात्त्विकमेवोपादेयं, राजसतामसे तु नोपादेय इति प्रकरणतात्पर्य्यम् ॥ ४० ॥

गी०भू०—प्रकरणार्थमुपसंहरन्ननुक्तमपि संगृह्णाति-न तदिति। पृथिव्यां मनुष्यादिषु दिवि स्वर्गादौ देवेषु च प्रकृतिं संसृष्टेषु ब्रह्मादिस्तम्बान्तेष्वित्यर्थः। तत् सत्त्वं प्राणिजातं, अन्यच्च वस्तु नास्ति। यदेभिः प्रकृतिजैस्त्रिभिर्गुणैर्मुक्तं विरहितं स्यात्। तथा च त्रिगुणात्मकेषु वस्तुषु सात्त्विकस्यैवोपयोगित्वात्तदेव ग्राह्यमन्यत्तु त्याज्यमिति प्रकरणार्थः ॥४०॥

**ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप।**
**कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥४१॥**

सारा०ब०—किञ्च, त्रिगुणात्मकमपि प्राणिजातं स्वाधिकारप्राप्तेन विहितकर्म्मणा परमेश्वरमाराध्य कृतार्थीभवतीत्याह–ब्राह्मणेति षड्भिः। स्वभावेनोत्पत्त्यैव प्रभवन्ति प्रादुर्भवन्ति ये गुणाः सत्त्वादयस्तैः प्रकर्षेण विभक्तानि पृथक्कृतानि कर्म्माणि ब्राह्मणादीनां विहितानि सन्तीत्यर्थः ॥ ४१ ॥

गी०भू०—यद्यपि सर्व्वाणि वस्तूनि त्रिगुणात्मकानि, तथापि ब्राह्मणादयश्चेत् स्वविहितानि कर्म्माणि भगवदाराधनभावेनानुतिष्ठेयुस्तदा तानि ज्ञाननिष्ठामुत्पाद्य मोचकानि भवन्तीति वक्तुं प्रकरणमारभते–ब्राह्मणेति षट्केन। शूद्राणां समासात् पृथक्करणं द्विजत्वाभावात्। ब्राह्मणादीनां चतुर्णां कर्म्माणि स्वभावप्रभवैर्गुणैः सह शास्त्रेण प्रविभक्तानि–स्वभावः प्राक्तनसंस्कारस्तस्मात् प्रभवन्ति ये गुणाः सत्त्वाद्यास्तैः सह शास्त्रेण तेषां कर्म्माणि विभज्योक्तानि। एवंगुणक-ब्राह्मणादयस्तेषामेतानि



कर्म्माणीति, तत्र सत्त्वप्रधानो ब्राह्मणः प्रशान्तत्वात्, सत्त्वोपसर्ज्जनरजःप्रधानः क्षत्रिय ईश्वरस्वभावत्वात्, तमउपसर्ज्जनरजःप्रधानो विट् ईहाप्रधानत्वात् रजउपसर्ज्जनतमःप्रधानः शूद्रः मूढस्वभावत्वात्। कर्म्माणि त्वग्रे वाच्यानि ॥४१॥

**शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च।**
**ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥४२॥**

सारा०ब०—तत्र सत्त्वप्रधानानां ब्राह्मणानां स्वभाविकानि कर्म्माण्याह–शम इति। शमोऽन्तरिन्द्रियनिग्रहः, दमो बाह्येन्द्रियनिग्रहस्तपः शारीरादि, ज्ञानविज्ञाने शास्त्रानुभवोत्थे, आस्तिक्यं शास्त्रार्थे दृढविश्वास एवमादि ब्रह्मकर्म्म ब्राह्मणस्य कर्म्म स्वभावजं स्वाभाविकम् ॥ ४२ ॥

गी०भू०—ब्राह्मणस्य स्वाभाविकं कर्म्माह–शम इति। शमोऽन्तःकरणस्य संयमः, दमो बहिःकरणस्य, तपः शास्त्रीयकायक्लेशः, शौचं द्विविधमुक्तम्, क्षान्तिः सहिष्णुता, आर्ज्जवमवक्रत्वम्, ज्ञानं शास्त्रात् परावरतत्त्वावगमः, विज्ञानं तस्मादेव तदेकान्तधर्म्माधिगमः, आस्तिक्यं सर्व्ववेदवेद्यो हरिर्निखिलैककरणं स्वविहितैः कर्म्मभिराराधितः केवलया भक्त्या च सन्तोषितः स्वपर्य्यन्तं सर्व्वमर्पयतीति शास्त्राधिगतेऽर्थे सत्यत्वविनिश्चयः-एतत् स्वाभाविकं ब्रह्मकर्म्म। यद्यपि सत्त्ववृद्धौ क्षत्रियादेरप्येते धर्म्मा भवन्ति, तथापि सत्त्वप्राधान्याद्ब्राह्मणस्येति भणितिः। एवमुक्तं विष्णुना–"क्षमा सत्यं दमः शौचं दानमिन्द्रियसंयमः। अहिंसा गुरुशुश्रूषा तीर्थानुसरणं दया॥ आर्ज्जवं लोभशून्यत्वं देवब्राह्मणपूजनम्। अनभ्यसूया च तथा धर्म्मसामान्य उच्यते॥" इति ॥४२॥

**शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।**
**दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥४३॥**

सारा०ब०—सत्त्वोपसर्ज्जनरजःप्रधानानां क्षत्रियाणां कर्म्माह—शौर्य्यं पराक्रमस्तेजः प्रागल्भ्यम्, धृतिर्धैर्य्यमीश्वरभावो लोकनियन्तृत्वम् ॥ ४३ ॥

गी०भू०—क्षत्रियस्याह-शौर्य्यमिति। शौर्य्यं युद्धे निर्भया प्रवृत्तिः, तेजः परैरधृष्यत्वम्, धृतिर्महत्यपि सङ्कटे देहेन्द्रियानवसादः, दाक्ष्यं क्रियासिद्धिकौशलम्, युद्धे स्वमृत्युनिश्चयेऽप्यपलायनं तत्रावैमुख्यम्, दानमसङ्कोचेन स्वबित्तत्यागः, ईश्वरभावः प्रजापालनार्थमीशितव्येषु शासनातिगेषु प्रभुत्वशक्तिप्रकाशः-एतत् क्षत्रियस्य स्वाभाविकं कर्म्म ॥४३॥

**कृषिगोरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम् ।**
**परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥४४॥**

सारा०ब०—तमउपसर्ज्जनरजःप्रधानानां कर्म्माह कृषीति—गां रक्षतीति गोरक्षस्तस्य भावो गोरक्ष्यम्। रजउपसर्ज्जनतमःप्रधानानां शूद्राणां कर्म्माह—परिचर्य्यात्मकं ब्राह्मणक्षत्रियबिशां परिचर्य्यारूपम् ॥ ४४ ॥

गी०भू०—वैश्यस्याह कृषीति-अन्नाद्युत्पत्तये हलादिना भूमेर्बिलेखनं कृषिः, पाशुपाल्यं गोरक्षम्, बणिक्कर्म्म बाणिज्यं क्रयविक्रय लक्षणम्, वृद्धौ धनप्रयोगः कुशीदमप्यत्रान्तर्गतम्-एतत् स्वभावसिद्धं वैश्यकर्म्म । अथ शूद्रस्याह—परीति – ब्राह्मणादीनां द्विजन्मनां परिचर्य्या शूद्रस्य स्वाभाविकं कर्म्म । एतानि चातुराश्रम्यकर्म्मणामुपलक्षणानि ॥४४॥

**स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।**
**स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥४५॥**



गी०भू०—उक्तानां कर्म्मणां ज्ञानहेतुतामाह-स्वे स्वे इति । स्व-स्व-बर्णाश्रमबिहिते कर्म्मण्यभिरतस्तदनुष्ठाता नरः संसिद्धिं बिशतन्तुवत् कर्म्मान्तर्गतां ज्ञाननिष्ठां लभते । ननु बन्धकेन कर्म्मणा बिमोचिका ज्ञाननिष्ठा कथमिति चेद्बुद्धिबिशेषादित्याह-स्वकर्म्मेति ॥४५॥

**यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।**
**स्वकर्मणा तमभ्यर्च्य सिद्धिं बिन्दति मानवः ॥४६॥**

सारा०ब०--यतः परमेश्वरात्, तमेबाभ्यर्च्येत्यनेन कर्म्मणा परमेश्वरस्तुष्यत्विति मनसा तदर्पणमेव तदभ्यर्च्चनम् ॥ ४६ ॥

गी०भू०—यत इति । यतः परमेश्वराद्भूतानां जन्मादिलक्षणा प्रवृत्तिर्भबति, येन चेदं सर्व्वं जगत्ततं व्याप्तं, तमिन्द्रादिदेवतात्मनाबस्थितं स्वबिहितेन कर्म्मणाभ्यर्च्य 'एतेन कर्म्मणा स्वप्रभुस्तुष्यतु' इति मनसा तस्मिंस्तत् समर्प्य मानवः सिद्धिं ज्ञाननिष्ठां बिन्दति ॥४६॥

**श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।**
**स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥४७॥**

सारा०ब०--न च क्रियादिभिः स्वधर्म्मं राजसं च वीक्ष्य तत्रानभिरुच्या सात्त्विकं कर्म्म कर्त्तव्यमित्याह-श्रेयानिति । परधर्म्मात् श्रेष्ठादपि स्वनुष्ठितात् सम्यगनुष्ठितादपि स्वधर्म्मो विगुणो निकृष्टोऽपि सम्यगनुष्ठातुमशक्योऽपि श्रेष्ठः । तेन बन्धुबधादि--दोषवत्त्वात स्वधर्म्मं युद्धं त्यक्त्वा भिक्षाटनादिरूप-परधर्म्मस्त्वया नानुष्ठेय इति भावः ॥ ४७ ॥

गी०भू०—ननु क्षत्रियादिधर्म्माणां राजसादित्वात्तेषु रुचिशून्यैः क्षत्रियादिभिः सात्त्विको ब्रह्मधर्म्म एबानुष्ठेय इति चेत्त-

त्राह-श्रेयानिति। स्वधर्म्मो बिगुणो निकृष्टोऽपि सम्यगनुष्ठितोऽपि वा परधर्म्मादुत्कृष्टात् स्वनुष्ठिताच्च श्रेयानतिप्रशस्तो बिहितत्वात्। न च हिंसानृतादि-दोषयुक्ताद्युद्धबाणिज्यादेः स्वधर्म्माच्छिलोञ्छवृत्त्यादिः परधर्म्मस्तद्दोषबिरहात् श्रेयानिति मन्तव्यम्, यतः स्वभावेन पूर्व्वोक्तेन नियतं नियमेन बिहितं कर्म्म कुर्व्वन् जनः किल्विषं दोषं नाप्नोति। क्रत्वङ्गहिंसाया बिहितत्वाद्यथा न दोषत्वं, तथा युद्धाद्यङ्गस्य हिंसानृतादेर्बिहितत्वादेव न तदिति भावः। व्याख्यातं चैतद्विस्तरेण तृतीये ॥४७॥

**सहजं कर्म कौन्तेय सदोषमपि न त्यजेत्।**
**सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः ॥४८॥**

साराबo—न च स्वधर्म्म एव केबलं दोषोऽस्तीति मन्तव्यम् यतः परधर्म्मेष्वपि दोषः कश्चित् कश्चिदस्त्येवेत्याह—सहजं स्वभावविहितं हि यतः सर्व्वेऽप्यारम्भा दृष्टादृष्टसाधनानि कर्म्माणि दोषेणावृता एव, यथा धूमेन दोषेणावृत एव बह्निर्दृश्यते। अतो धूमरूपं दोषमपाकृत्य तस्य ताप एव तमःशीतादिनिवृतये यथा सेव्यते तथा कर्म्मणोऽपि दोषांशं विहाय गुणांश एव सत्त्वशुद्धये सेव्य इति भावः॥ ४८॥

गीoभूo—न खलु क्षत्रियादिधर्म्मा एव युद्धादयः सदोषाः, ब्रह्मधर्म्माश्च तथेत्याह, सहजमिति। सहजं स्वभावप्राप्तं कर्म्म सदोषमपि हिंसादिमिश्रमपि न त्यजेदपि तु बिहितत्वात् कुर्य्यादेव-निर्द्दोषत्वबुद्ध्या ब्रह्मकर्म्मणा चरेदित्यर्थः, यतः सर्व्वेति। सर्व्वेषां ब्राह्मणादि-बर्णानामारम्भाः कर्म्माणि त्रिगुणात्मकत्वाद्द्रव्यसाध्यताच्च सामान्यतः केनचिद्दोषेणावृता व्याप्ता एव भवन्ति। धूमेनेबाग्निरिति यथाग्नेर्धूमांशमपाकृत्य शीतादिनिवृत्तये तापः सेव्यते, तथा कर्म्मणां भगवदर्पणेन दोषांशं



निर्धूयात्मदर्शनाय ज्ञानजनकत्वांशः सेव्य इति भावः ॥४८॥

**असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः।**
**नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥४९॥**

साराबo—एवं सति कर्म्मणि दोषांशान् कर्त्तृत्वाभिनिवेशफलाभिसन्धिलक्षणान् त्यक्तवतः प्रथमसन्न्यासिनस्तस्य कालेन साधनपरिपाकतो योगारूढत्वदशायां कर्म्मणां स्वरूपेणापि त्यागरूपं द्वितीयं सन्न्यासमाह-असक्तबुद्धिः सर्व्वत्रापि प्राकृतबस्तुषु न सक्ता आसक्तिशून्या बुद्धिर्यस्य सः, अतो जितात्मा वशीकृतचित्तो विगता ब्रह्मलोकपर्य्यन्तेष्वपि सुखेसु स्पृहा यस्य सः; ततश्च सन्न्यासेन कर्म्मणा स्वरूपेणापि त्यागेन नैष्कर्म्मस्य परमां श्रेष्ठां सिद्धिमधिगच्छति प्राप्नोति, योगारुढ़दशायां तस्य नैष्कर्म्मयमतिशयेन सिद्धं भवतीत्यर्थः॥ ४९॥

गीoभूo—एवमारुरुक्षुः सन्निष्ठो ज्ञानगर्भया कर्म्मनिष्ठयानुभूतम्वस्वरूपस्ततः कर्म्मनिष्ठां स्वरूपतस्त्यजेदित्याह-असक्तेति। सर्व्वत्रात्मातिरिक्तेषु बस्तुष्वसक्तबुद्धिर्यतो जितात्मा स्वात्मानन्दास्वादेन बशीकृतमना अतएव बिगतस्पृह आत्मातिरिक्तबस्तुसाध्येषु नानाबिधेष्वानन्देषु स्पृहाशून्यः। स्वात्मानन्दास्वादबिक्षेपकाणां कर्म्मणां सन्न्यासेन स्वरूपतस्त्यागेन परमां नैष्कर्म्यलक्षणां सिद्धिमधिगच्छति योगारूढः सन्। एवमेवोक्तं तृतीये-"यस्त्वात्मरतिरेव स्यात्" इत्यादिना ॥४९॥

**सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे।**
**समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ॥५०॥**

साराबo—ततश्च यथा येन प्रकारेण ब्रह्म प्राप्नोति ब्रह्मानुभवतीत्यर्थः। यैर्ज्ञानस्य निष्ठा परा परमोऽन्त इत्यर्थः;
सैव

--"निष्ठा निष्पत्तिनाशान्ताः" इत्यमरः । अविद्यायामुपरतप्रायायां विद्याया अप्युपरमारम्भे येन प्रकारेण ज्ञानसन्न्यासं कृत्वा ब्रह्मानुभवेत्तं बुध्यस्वेत्यर्थः ॥ ५० ॥

गी०भू०—सिद्धिमिति – विहितेन कर्म्मणा हरिमाराध्य तत्प्रसादजां सर्व्वकर्म्मत्यागान्तामात्मध्याननिष्ठां प्राप्तो यथा येन प्रकारेण स्थितो ब्रह्म प्राप्नोति–आविर्भावितगुणाष्टकं स्वरूपमनुभवति, तथा तं प्रकारं समासेन गदतो मे मत्तो निबोध । ज्ञानस्य या परा निष्ठा परेशविषया ज्ञाननिष्ठा त्वां प्रति मयोच्यते, ताञ्च शृणु ॥५०॥

बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च ।
शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥५१॥
विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥५२॥
अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् ।
विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥५३॥

सारा०ब०--बुद्ध्या विशुद्धया सात्त्विकया धृत्यापि सात्त्विकयात्मानं मनो नियम्य । ध्यानेन भगवच्चिन्तनेनैव यः परो योगस्तत्परायणः, बलं कामरागयुक्तं न तु सामर्थ्यम् । अहङ्कारादीन् बिमुच्येत्यविद्योपरमः, शान्तः सत्त्वगुणस्याप्युपशान्तिमानिति कृतज्ञानसन्न्यास इत्यर्थः,–"ज्ञानञ्च मयि संन्यसेत्" इत्येकादशोक्तेः । अज्ञानज्ञानयोरुपरमं बिना ब्रह्मानुभवानुपपत्तिरिति भावः । ब्रह्मभूयाय ब्रह्मानुभवाय कल्पते समर्थो भवति ॥ ५१-५३ ॥

गी०भू०—तं प्रकारमाह–बुद्ध्येति । बिशुद्धया सात्त्विकया बुद्ध्या युक्तस्तादृश्या धृत्या चात्मानं मनो नियम्य समाधियोग्यं कृत्वा, शब्दादीन् बिषयांस्त्यक्त्वा तान् सन्निहितान् बिधाय रागद्वेषौ च तद्धेतुकौ व्युदस्य दूरतः परिहृत्य, बिबिक्तसेवी निर्ज्जनस्थः, लघ्वाशी मितभुक्, यतानि ध्येयाभिमुखीकृतानि बागादीनि येन सः, नित्यं ध्यानयोगपरो हरिचिन्तननिरतः, वैराग्यमात्मेतरबस्तुमात्रबिषयकम, अहमिति । अहङ्कारो देहात्माभिमानः, बलं तद्वर्द्धकं बासनारूपम, दर्पस्तद्धेतुकः प्रारब्धशेषबशादुपागतेषु भोग्येषु कामोऽभिलाषः, तेष्वन्यैरपहृतेषु क्रोधः, परिग्रहश्च तत्कर्म्मकः, तानेतानहङ्कारादीन बिमुच्य निर्ममः सन् ब्रह्मभूयाय गुणाष्टकबिशिष्टसात्मरूपत्वाय कल्पते तदनुभवति । शान्तो निस्तरङ्गसिन्धुरिव स्थितः ॥५१-५३॥



ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥५४॥

सारा०ब०—ततश्चोपाध्यपगमे सति ब्रह्मभूतोऽनावृतचैतन्यत्वेन ब्रह्मरूप इत्यर्थः, गुणमालिन्यापगमात् । प्रसन्नश्चासावात्मा चेति सः, ततश्च पूर्व्वदशायामिव नष्टं न शोचति न चाप्राप्तं काङ्क्षति देहाद्यभिमानाभावादिति भावः । सर्व्वेषु भूतेषु भद्राभद्रेषु बालक इव 'समः' बाह्यानुसन्धानाभावादिति भावः । ततश्च निरिन्धनाग्नाविव ज्ञाने शान्तेऽप्यनश्वरां ज्ञानान्तर्भूतां मद्भक्तिं श्रवणकीर्त्तनादिरूपां लभते, तस्या मत्स्वरूपशक्तिवृत्तित्वेन मायाशक्तिभिन्नत्वादविद्याविद्ययोरपगमेऽप्यनपगमात् । अतएव परां ज्ञानादन्यां श्रेष्ठां निष्कामकर्म्मज्ञानाद्युर्व्वरितत्वेन केबलामित्यर्थः । लभत इति पूर्व्वं ज्ञानवैराग्यादिषु मोक्षसिद्ध्यर्थं कलया बर्त्तमानाया अपि सर्व्वभूतेष्वन्तर्य्यामिन इव तस्याः स्पष्टोपलब्धिर्नासीदिति भावः । अतएव कुरुत इत्यनुक्त्वा

लभत इति प्रयुक्तम्,–माषमुद्गादिषु मिलितां तेषु नष्टेष्वप्यनश्वरां काञ्चनमणिकामिव तेभ्यः पृथक्तया केवलां लभत इतिवत्। सम्पूर्णायाः प्रेमभक्तेस्तु प्रायस्तदानीं लाभसम्भवोऽस्ति, नापि तस्याः फलं सायुज्यमित्यतः पराशब्देन प्रेमलक्षणेति व्याख्येयम् ॥ ५४ ॥

गी०भू०—तस्य ब्रह्मभूयोत्तरभाविनं लाभमाह–ब्रह्मेति-ब्रह्मभूतः साक्षात्कृताष्टगुणकस्वस्वरूपः, प्रसन्नात्मा क्लेशकर्म्मविपाकाशयानां विगमादतिस्वच्छः–'नद्यः प्रसन्नसलिलाः' इत्यादाववतिवैमल्यं 'प्रसन्न'शब्दार्थः, स एवंभूतो मदन्यान् वाञ्छितं प्रति न शोचति न च तान् काङ्क्षति, सर्व्वेषु मदन्येषूच्चावचेषु भूतेषु समः–हेयत्वाविशेषाल्लोष्ट्रकाष्ठवत्तानि मन्यमानः, ईदृशः सन् परां मद्भक्तिं लभते–'निष्ठा ज्ञानस्य या परा' इत्युक्तां मदनुभवलक्षणां मद्वीक्षणसमानाकारां साध्यां भक्तिं विन्दतीत्यर्थः ॥५४॥

**भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः ।**
**ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥५५॥**

सारा०व०—ननु तया लब्धया भक्त्या तदानीं तस्य किं स्यादित्यतोऽर्थान्तरन्यासेनाह–भक्त्येति। अहं यावान् यश्चास्मि तं मां तत्पदार्थं ज्ञानी वा नानाविधो भक्तो वा भक्त्यैव तत्त्वतोऽभिजानाति। 'भक्त्याहमेकया ग्राह्यः" इति मदुक्तेः। यस्मादेवम् तस्मात् प्रस्तुतः स ज्ञानी, ततस्तया भक्त्यैव तदनन्तरं विद्योपरमादुत्तरकाल एव मां ज्ञात्वा मां विशति मत्सायुज्यसुखमनुभवति मम मायातीतत्वादविद्यायाश्च मायात्वाद् विद्ययाप्यहमवगम्य इति भावः। यत्तु "सांख्ययोगौ च वैराग्यं तपो भक्तिश्च केशवे। पञ्चपर्व्वैव विद्या" इति नारदपञ्चरात्रे विद्यावृत्तित्वेन भक्तिः श्रूयते, तत्र खलु ह्लादिनी-



शक्तिवृत्तेर्भक्तेरेव कला काचिद्विद्यासाफल्यार्थं विद्यायां प्रविष्टा कर्म्मसाफल्यार्थं कर्म्मयोगेऽपि प्रविशति, तया विना कर्म्मज्ञानयोगादीनां श्रममात्रत्वोक्तेः। यतो निर्गुणा भक्तिः सद्गुणमय्या विद्याया वृत्तिर्वस्तुतो न भवत्यतो ह्यज्ञाननिवर्त्तकत्वेनैव विद्यायाः कारणत्वं तत्पदार्थज्ञाने तु भक्तेरेव। किञ्च, "सत्त्वात् संजायते ज्ञानम्" इति स्मृतेः सत्त्वजं ज्ञानं सत्त्वमेव तच्च सत्त्वं विद्या-शब्देनोच्यते यथा तथा भक्त्युत्थं ज्ञानं भक्तिरेव, सैव क्वचित् भक्ति-शब्देन, क्वचित् ज्ञान-शब्देन चोच्यत इति ज्ञानमपि द्विविधं द्रष्टव्यम्। तत्र प्रथमं ज्ञानं संन्यस्य, द्वितीयेन ज्ञानेन ब्रह्मसायुज्यमाप्नुयादित्येकादशस्कन्धपञ्चविंशत्यध्यायदृष्ट्यापि ज्ञेयम्। अत्र केचिद्भक्त्या विनैव केवलेनैव ज्ञानेन सायुज्यार्थिनस्ते ज्ञानिमानिनः क्लेशमात्रफला अतिविगीता एव; अन्ये तु भक्त्या विना केवलेन ज्ञानेन न मुक्तिरिति ज्ञात्वा भक्तिमिश्रमेव ज्ञानमभ्यस्यन्तो भगवांस्तु मायोपाधिरेवेति भगवद्वपुर्गुणमयं मन्यमाना योगारूढत्वदशामपि प्राप्तास्तेऽपि ज्ञानिनो विमुक्तमानिनो विगीता एव यदुक्तम्––"मुखबाहुरुपादेभ्यः पुरुषस्याश्रमैः सह। चत्वारो जज्ञिरे वर्णा गुणैर्विप्रादयः पृथक्॥ य एवं पुरुषं साक्षादात्मप्रभवमीश्वरम्। न भजन्त्यवजानन्ति स्थानाद्भ्रष्टाः पतन्त्यधः॥" इति। अस्यार्थः–ये न भजन्ति, ये च भजन्तोऽप्यवजानन्ति ते सन्न्यासिनोऽपि विनष्टाविद्या अप्यधःपतन्ति, तथा ह्युक्तम् –"येऽन्येऽरविन्दाक्ष विमुक्तमानिनस्त्वय्यस्तभावादविशुद्धबुद्धयः। आरुह्य कृच्छ्रेण परं पदं ततः पतन्त्यधोऽनादृतयुष्मदङ्घ्रयः" इति। अत्र अङ्घ्रिपदं भक्त्यैव प्रयुक्तं विवक्षितम्, अनादृतयुष्मदङ्घ्रय इति–तनोर्गुणमयत्वबुद्धिरेव तनोरनादरः, यदुक्तम् –"अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम्" इति, वस्तुतस्तु

मानुषी सा तनुः सच्चिदानन्दमय्येव;तस्या दृश्यत्वन्तु दुस्तर्क्येतदीयकृपाशक्तिप्रभावादेव यदुक्तं नारायणाध्यात्मबचनम्-"नित्याव्यक्तोऽपि भगवानीक्षते निजशक्तितः। तामृते परमानन्दं कः पश्येत्तामिमं प्रभुम् ॥" इति । एवञ्च भगवत्तनोः सच्चिदानन्दमयत्वे "क्लृप्तं सच्चिदानन्दविग्रहं श्रीवृन्दावनसुरभूरुह--तलासीनम्" इति, "शाब्दं ब्रह्म बपुर्दधत्" इत्यादि श्रुति--स्मृतिपरसहस्रबचनेषु प्रमाणेषु सत्स्वपि "मायां तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्" इति श्रुतिदृष्ट्यैव भगवानपि मायोपाधिरिति मन्यन्ते किन्तु स्वरूपभूतया नित्यशक्त्या मायाख्यया युतः--"अतो मायामयं विष्णुं प्रबदन्ति सनातनम्" इति माध्वभाष्यप्रमाणितश्रुतेः। मायान्वित्यत्र माया-शब्देन स्वरूपभूता चिच्छक्तिरेवाभिधीयते न त्वस्वरूपभूता त्रिगुणमय्येव शक्तिरिति तस्याः श्रुतेरर्थं न मन्यन्ते, यद्वा प्रकृतिं दुर्गां मायिनन्तु महेश्वरं शम्भुं विद्यादित्यर्थमपि नैब मन्यन्ते। अतो भगवदपराधेन जीबन्मुक्तत्वदशां प्राप्ता अपि तेऽधःपतन्ति, यदुक्तं बासनाभाष्यधृतं परिशिष्टबचनम्-"जीबन्मुक्ता अपि पुनर्यान्ति संसारबासनाम्। यद्यचिन्त्यमहाशक्तौ भगवत्यपराधिनः ॥" इति । ते च फलप्राप्तौ सत्यामर्थात् नास्ति साधनोपयोग इति मत्वा ज्ञानसन्न्यासकाले ज्ञानं तत्र गुणीभूतां भक्तिमपि संत्यज्य मिथ्यैबापरोक्षब्रह्मानुभवं स्वस्य मन्यन्ते । श्रीविग्रहापराधेन भक्त्या अपि ज्ञानेन सार्द्धमन्तर्द्धानाद्भक्तिं ते पुनर्नैव लभन्ते भक्त्या बिना च तत्पदार्थाननुभाबान्मृषा-समाधयो जीबन्मुक्तमानिन एब ते ज्ञेयाः, "यदुक्तम्--येऽन्येऽरविन्दाक्ष बिमुक्तमानिनः" इति । ये तु भक्तिमिश्रं ज्ञानमभ्यस्यन्तो भगबन्मूर्त्तिं सच्चिदानन्दमयीमेब मन्यमानाः क्रमेणाविद्याविद्ययोरुपरामे परां भक्तिं न लभन्ते, ते जीवन्मुक्ता द्विविधाः--एके सायु-



ज्यार्थं भक्तिं कुर्वन्तस्तयैव 'तत्' पदार्थमपरोक्षीकृत्य तस्मिन् सायुज्यं लभन्ते ते संगीता एव, अपरे भूरिभागा यादृच्छिककशान्तमहाभागवतसङ्गप्रभावेण त्यक्तमुमुक्षाः शुकादिवद्भक्तिरसमाधुर्य्यास्वाद एव निमज्जन्ति, ते तु परमसंगीता एव । यदुक्तम्-"आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे। कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः ॥" इति। तदेवं चतुर्विधा ज्ञानिनो द्वये विगीताः पतन्ति, द्वये संगीतास्तरन्ति संसारमिति ॥ ५५ ॥

गी०भू०—ततः किं तदाह-भक्त्येति । स्वरूपतो गुणतश्च योऽहं बिभूतितश्च याबानहमस्मि तं मां परया मद्भक्त्या तत्त्वतोऽभिजानात्यनुभवति । ततो मत्परभक्तितो हेतोरुक्तलक्षणं मां तत्त्वतो याथात्म्येन ज्ञात्वानुभूय तदनन्तरं तत एव हेतोर्मां बिशते मया सह युज्यते। 'पुरं प्रबिशति' इत्यत्र पुरसंयोग एब प्रतीयते न तु पुरात्मकत्वम् । अत्र तत्त्वतोऽभिज्ञाने प्रवेशे च भक्तिरेब हेतुरुक्तो बोध्यः-'भक्त्या त्वनन्यया शक्यः' इत्यादि पूर्व्वोक्तेः। तदनन्तरमिति मत्स्वरूपगुणबिभूति-तात्त्विकानुभबादुत्तरस्मिन् काले इत्यर्थः, यद्वा, परया भक्त्या मां तत्त्वतो ज्ञात्वा ततस्तां भक्तिमादायैब मां विशते "ल्यबलोपे कर्म्मणि पञ्चमी"। मोक्षेऽपि भक्तिरस्तीत्याह सूत्रकृत्-"आप्रायणात्तत्रापि हि दृष्टम्" इति-"आप्रायणादामोक्षात्तत्रापि मोक्षे च भक्तिरनुबर्त्तते" इति श्रुतौ दृष्टमिति सूत्रार्थः। भक्त्या बिनष्टाबिद्यानां भक्त्याः स्वादो बिबर्द्धते-सितया नष्टपित्तानां सितास्वादबदिति रहस्यबिदः । इत्थञ्च सन्निष्ठानां साधनसाध्यपद्धतिरुक्ता ॥५५॥

सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥५६॥

सारा०ब०—तदेवं ज्ञानी यथाक्रमेणैव कर्म्मफलसन्न्यास-कर्म्मसन्न्यास-ज्ञानसन्न्यासैर्मत्-सायुज्यं प्राप्नोतीत्युक्तम्। मद्भक्तस्तु मां यथा प्राप्नोति तदपि शृणिवत्याह-सर्व्वेति। मद्व्यपाश्रयो मां बिशेषतोऽपकर्षेण सकामतयापि य आश्रयते सोऽपि किं पुनर्निष्कामभक्त इत्यर्थः। सर्व्वकर्म्माण्यपि नित्यनैमित्तिककाम्यानि पुत्रकलत्रादि-पोषणलक्षणानि व्यबहारिकाण्यपि सर्व्वाणि कुर्व्वाणः किं पुनस्त्यक्तकर्म्मयोगज्ञानदेवतान्तरोपासनान्यकामान्यभक्त इत्यर्थः। अत्राश्रयते सम्यग् सेबत इति आङुपसर्गेन सेबायाः प्रधानीभूतत्वम्। कर्म्माण्यपीत्यपि-शब्देनापकर्षबोधकेन कर्म्मणां गुणीभूतत्वम्। अतोऽयं कर्म्ममिश्रभक्तिमान्, न तु भक्तिमिश्रकर्म्मबानिति प्रथमषट्कोक्ते कर्म्माणि नातिव्याप्तिः। शाश्वतं महत्पदं मद्धाम वैकुण्ठमथुराद्वारकायोध्यादिकमबाप्नोति। ननु महाप्रलये तत्तद्धाम कथं स्थास्यति? तत्राह-अव्ययं महाप्रलये मद्धाम्नः किमपि न व्ययति, मदतर्क्यप्रभावादिति भावः। ननु ज्ञानी खल्वनेकैर्जन्मभिरनेकतपआदिक्लेशैः सर्व्वबिषयेन्द्रियोपरामेणैव नैष्कर्म्म्ये सत्येब यत् सायुज्यं प्राप्नोति, तस्य ते नित्यं धाम सकर्म्मकत्वे सकामकत्वेऽपि त्वदाश्रयणमात्रेणैब कथं प्राप्नोति? तत्राह-मत्प्रसादादिति-मत्प्रसादस्यातर्क्यमेव प्रभावत्वं जानीहीति भावः॥ ५६॥

गी०भू०—अथ परिनिष्ठितानामाह-सर्व्वेति सार्द्धद्वयाभ्याम्। मद्व्यपाश्रयो मदेकान्ती सर्व्वाणि स्वविहितानि कर्म्माणि यथायोगं कुर्व्वाणः, अपि शब्दाद्गौणकाले-मदेकान्तित्वस्य मुख्यकालाभाबात्। एबमाह सूत्रकारः-"सर्व्वथापि तत्र बोभयलिङ्गात्" इति। ईदृशः स मत्प्रसादान्मदत्यनुग्रहात् शाश्वतं नित्यमव्ययमपरिणामिज्ञानानन्दात्मकं पदं परमव्योमाख्यमबाप्नोति लभते॥५६॥



चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः।
बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव॥५७॥

सारा०ब०—ननु तर्हि मां प्रति त्वं निश्चयेन किमाज्ञापयसि? --किमहमनन्यभक्तो भवानि, किंवानन्तरोक्तलक्षणः सकामभक्त एव? तत्र सर्व्वप्रकृष्टोऽनन्यभक्तो भवितुं त्वं न प्रभविष्यसि, नापि सर्व्वभक्तेष्वपकृष्टः सकामभक्तो भव किन्तु त्वं मध्यमभक्तो भवेत्याह-चेतसेति। सर्व्वकर्म्माणि स्वाश्रमधर्म्मान् व्यबहारिककर्म्माणि च मयि संन्यस्य समर्प्य मत्परोऽहमेव परः प्राप्यः पुरुषार्थो यस्य स निष्काम इत्यर्थः; यदुक्तं पूर्व्वमेव--"यत् करोषि यदश्नासि यज्जुहोषि ददासि यत्। यत्तापस्यसि कौन्तेय तत् कुरुष्व मदर्पणम्॥" इति। बुद्धियोगं व्यबसायात्मिकया बुद्ध्या योगम्, सततं मच्चित्तः कर्म्मानुष्ठानकालेऽन्यदापि मां स्मरन् भव॥ ५७॥

गी०भू०—तादृशत्वादेब त्वं सर्व्वाणि स्वबिहितानि कर्म्माणि कर्तृत्वाभिमानादिशून्येन चेतसा स्वामिनि मयि संन्यस्यार्पयित्वा मत्परो मदेकपुरुषार्थो मामेव बुद्धियोगमुपाश्रित्य सततं कर्म्मानुष्ठानकाले मच्चित्तो भव। एतच्च त्वां प्रति प्रागप्युक्तं 'यत् करोषि' इत्यादिना-अर्पयित्वैव कर्म्माणि कुरु, न तु कृत्वार्पयेति॥५७॥

मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि।
अथ चेत्त्वमहंकारान्न श्रोष्यसि विनङ्क्ष्यसि॥५८॥

सारा०ब०—ततः किमत आह-मच्चित्त इति॥ ५८॥

गी०भू०—एबं मच्चित्तस्त्वं मत्प्रसादादेब सर्व्वाणि दुर्गाणि दुस्तराणि संसारदुःखानि तरिष्यसि, तत्र ते न चिन्ता। तान्यहं भक्तबन्धुरपनेष्यामि दास्यामि चात्मानमिति परिनिष्ठितानां

साधनसाध्यपद्धतिरुक्ता। अथ चेदहङ्कारात् कृत्याकृत्यबिषयकज्ञानाभिमानात्त्वं मदुक्तं न श्रोष्यसि, तर्हि बिनङ्क्ष्यसि-स्वार्थात् बिभ्रष्टो भविष्यसि। न हि कश्चित् प्राणिनां कृत्याकृत्ययोर्विज्ञाता प्रशास्ता बा मत्तोऽन्यो बर्त्तते ॥५८॥

**यदहंकारमाश्रित्य न योत्स्य इति मन्यसे ।**
**मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥५९॥**

सारा०ब०—ननु क्षत्रियस्य मम युद्धमेव परो धर्म्मस्तत्र बन्धुबधपापाद्भीत एव प्रबर्तितुं नेच्छामीति तत्र सतर्ज्जनमाह--यदहमिति। प्रकृतिः स्वभावः। अधुना त्वं मद्वचनं न मानयसि, यदा तु महाबीरस्य तव स्वाभाबिको युद्धोत्साहो दुर्व्वार एबोद्भबिष्यति, तदा युध्यमानः स्वयमेब भीष्मादीन् गुरून् हनिष्यन् मया हसिष्यस इति भावः ॥ ५९ ॥

गी०भू०—यद्यपि क्षत्रियस्य युद्धमेव धर्म्मस्तथापि गुरुबिप्रादिबधहेतुकात् पापाद्भीतस्य मे न तत्र प्रवृत्तिरिति कृत्याकृत्यबिज्ञातृत्वाभिमानमहङ्कारमाश्रित्य 'नाहं योत्स्ये' इति यदि त्वं मन्यसे, तर्हि तवैष व्यबसायो निश्चयो मिथ्या निष्फलो भावी-प्रकृतिर्मन्माया रजोगुणात्मना परिणता मद्वाक्याबहेलिनं त्वां गुर्व्वादिवधे निमित्ते युद्धे नियोक्ष्यति प्रबर्त्तयिष्यत्येव ॥५९॥

**स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा ।**
**कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत् ॥६०॥**

सारा०ब०—उक्तमेबार्थं निबृणोति--स्वभाबः क्षत्रियत्वे हेतुः, पूर्व्वसंस्कारस्तस्माज्जातेन स्वीयेन कर्म्मणा शौर्य्यादिना निबद्धो यन्त्रितः ॥ ६० ॥

गी०भू०—उक्तमुपपादयति-स्वभावेति - यदि त्वं मोहादज्ञानान्मदुक्तमपि युद्धं कर्त्तुं नेच्छसि, तदा स्वभाबजेन स्वेन कर्म्मणा शौर्य्येण मन्मयोद्भासितेन निबद्धोऽबशस्तत् करिष्यसि ॥६०॥



**ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।**
**भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥६१॥**

सारा०ब०—श्लोकद्वयेन स्वभावबादिनां मतमुक्त्वा स्वमतमाह-ईश्वरो नारायणः सर्व्वान्तर्य्यामी--"यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो, यं पृथिबी न वेद, यस्य पृथिबी शरीरं, यः पृथिबीमन्तरो यमयतीति।" "यच्च किञ्चित् जगत् सर्व्वं दृश्यते श्रूयतेऽपि वा। अन्तर्बहिश्च तत् सर्व्वं व्याप्य नारायणः स्थितः॥" इत्यादि-श्रुतिप्रतिपादित ईश्वरोऽन्तर्य्यामी हृदि तिष्ठति, किं कुर्व्वन्? सर्व्वाणि भूतानि मायया निजशक्त्या भ्रामयन् तत्तत् कर्म्माणि प्रबर्त्तयन्, यथा सूत्रसञ्चारादियन्त्रमारूढानि कृत्रिमाणि पाञ्चालिकारूपाणि सर्व्वभूतानि माया विभ्रमयति तद्वदित्यर्थः, यद्वा यन्त्रारूढाणि शरीरारूढान सर्व्वजीवानित्यर्थः ॥ ६१ ॥

गी०भू०—बिज्ञातृत्वाभिमानमिबालक्ष्याऽर्ज्जुनमत्याज्यत्वाद्विधान्तरेणोपदिशति-ईश्वर इति द्वाभ्याम। हे अर्ज्जुन! त्वं चेत् स्वं बिज्ञं मन्यसे तर्ह्यन्तर्य्यामिब्राह्मणात्त्वया ज्ञातो य ईश्वरः सर्व्वभूतानां ब्रह्मादिस्थाबरान्तानां हृद्देशे तिष्ठति मायया स्वशक्त्या तानि भ्रामयन् सन्। सर्व्वभूतानि बिशिनष्टि—यन्त्रेति-यत् कर्म्मानुगुणं माया-निर्म्मितं देहेन्द्रियप्राणलक्षणं यन्त्रं तदारूढानि। रूपकेणोपमात्र व्यज्यते-यथा सूत्रधारो दारुयन्त्रारूढानि कृत्रिमाणि भूतानि भ्रामयन्ति, तद्वत् ॥६१॥

तमेव शरणं गच्छ सर्वभावेन भारत ।
तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥६२

सारा०ब०—एतज्ज्ञापनप्रयोजनमाह--तमेवेति । परामविद्याविद्ययोर्निवृत्तिम्, ततश्च शाश्वतं स्थानं वैकुण्ठम्। इयमन्तर्य्यामिशरणापत्तिरन्तर्य्याम्युपासकानामेव, भगवदुपासकानान्तु भगवच्छरणापत्तिरग्रे वक्ष्यत एवेति केचिदाहुः। अन्यस्तु यो मदिष्टदेवः श्रीकृष्णः स एव मद्गुरुर्मां भक्तियोगं तदनुकूलं हितश्चोपदेशमुपदिशति च, तमहं शरणं प्रपद्ये तथा कृष्ण एव मदन्तर्य्यामी, सोऽपि मां तत्र तत्र प्रवर्त्तयतु, तञ्चाहं शरणं प्रपद्य इत्यनिशं भावयति। यदुक्तमुद्धवेन--"नैवोपयन्त्यपचितिं कवयस्तवेश, ब्रह्मायुषापि कृतमृद्धमुदः स्मरन्तः। योऽन्तर्बहिस्तनुभृतामशुभं विधुन्वन्नाचार्य्यचैत्यवपुषा स्वगतिं व्यनक्ति॥" इति ॥ ६२॥

गी०भू०—तर्हि तमेवेश्वरं सर्व्वभावेन कायादिव्यापारेण शरणं गच्छ, ततः किमिति चेत्तत्राह–तदिति । परां शान्तिं निखिलक्लेशविश्लेषलक्षणाम्, शाश्वतं नित्यं स्थानं च-"तद्विष्णोः परमं पदम्" इत्यादि श्रुतिगीतं तद्धाम प्राप्स्यसि। स चेश्वरोऽहमेव त्वत्सखः "सर्व्वस्य चाहं हृदि सन्निविष्टः" इत्यादि मत्पूर्व्वोक्तेर्देवर्ष्यादिसम्मतिग्राहिणा त्वयापि 'परं ब्रह्म परं धाम' इत्यादिना स्वीकृतत्वाच्च, विश्वरूपदर्शने प्रत्यक्षितत्वाच्च। तस्मान्मदुपदेशे तिष्ठेति ॥६२॥

इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया ।
विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥६३॥

सारा०ब०—सर्व्वगीतार्थमुपसंहरति–इतीति । कर्म्मयोगस्याष्टाङ्गयोगस्य ज्ञानयोगस्य च ज्ञानं ज्ञायतेऽनेनेति ज्ञानं ज्ञानशास्त्रं गुह्याद्गुह्यतरमित्यतिरहस्यत्वात् कैरपि वशिष्ठ-बादरायण-नारदाद्यैरपि स्व-स्व-कृत-शास्त्रेणाप्रकाशितम्; यद्वा तेषां सार्व्वज्ञ्यमापेक्षिकं मम त्वात्यन्तिकमित्यतस्ते त्वेदतिगुह्यत्वान्न जानन्ति, मयाप्यतिगुह्यत्वादेव ते सर्व्वथैव नैतदुपदिष्टा इति भावः। एतदशेषेण निःशेषत एव विमृश्य यथा येन प्रकारेण स्वाभिरुचितस्तत् कर्त्तुमिच्छसि, तथा तत् कुर्व्वित्यन्त्यं ज्ञानषट्कं सम्पूर्णम्। षट्कत्रिकमिदं सर्व्वविद्याशिरोरत्नं श्रीगीताशास्त्रं महानर्घरहस्यतम- भक्तिसम्पुटं भवति-प्रथमं 'कर्म्म' षट्कं यस्याधारपिधानं कानकं भवति, अन्त्यं 'ज्ञान'-षट्कं यस्योत्तरापिधानं मणिजटितं कानकं भवति, तयोर्मध्यवर्त्ति-षट्कगता भक्तिर्बीजगदनर्घ्या श्रीकृष्णवशीकारिणी महामणिमतल्लिका विराजते, यस्याः परिचारिका तदुत्तरपिधानाद्धगता 'मन्मना भव' इत्यादि पद्यद्वयी चतुःषष्ट्यक्षरा शुद्धा भवतीति बुध्यते ॥ ६३ ॥

गी०भू०—शास्त्रमुपसंहरन्नाह–इतीति – इति पूर्व्वोक्तप्रकारकं ज्ञानं गीताशास्त्रम्–"ज्ञायन्ते कर्म्मभक्तिज्ञानान्यनेन" इति निरुक्तेः, तन्मया ते तुभ्यमाख्यातं संप्रोक्तम्। गुह्याद्रहस्यमन्त्रादिशास्त्राद्गुह्यतरमिति गोप्यम्। एतच्छास्त्रशेषेण सामस्त्येन विमृश्य पश्चाद्यथेच्छसि, तथा कुरु। एतस्मिन् पर्य्यालोचिते तव मोहविनाशो मद्वचसि स्थितिश्च भविष्यतीति ॥६३॥

सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥६४॥

सारा०ब०—ततश्चातिगम्भीरार्थं गीताशास्त्रं पर्य्यालोचयितुं प्रवर्त्तमानं तूष्णीम्भूयैव स्थितं स्व-प्रियसखमर्ज्जुनमालक्ष्य कृपाद्रवीभूत नवनीतो भगवान्–भोः प्रियवयस्य अर्ज्जुन !

सर्व्वशास्त्रसारमहमेव श्लोकाष्टकेन ब्रवीमि, अलं ते तत्तत्-पर्य्यालोचनक्लेशेनेत्याह-सर्व्वेति । भूय इति राजविद्या राजगुह्याध्यायान्ते पूर्व्वमुक्तम् । मन्मना भव मद्भक्तो मद्‌याजी मां नमस्कुरु । मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ।।" इति यत्तदेव वचः परमं सर्व्वशास्त्रार्थ-सारस्य गीताशास्त्रस्यापि सारं गुह्यतममिति-नातः परं किञ्चन गुह्यमस्ति क्वचित् कुतश्चित् कथमप्यखण्डमिति भावः। पुनः कथने हेतुमाह-इष्टोऽसि दृढ़मतिशयेन एव प्रियो मे सखा भवसीति। तत एव हेतोर्हितं त इति सखायं विनातिरहस्यं न कमपि कश्चिदपि ब्रूत इति भावः। दृढ़मतिरिति च पाठः ॥ ६४ ॥

गी०भू०—अथ निरपेक्षाणां साधनसाध्यपद्धतिमुपदेक्ष्यन्नादौ तां स्तौति-सर्व्वेति – सर्व्वेषु गुह्येषु मध्येऽतिशयितं गुह्यमिति सर्व्वगुह्यतमम्। भूय इति-राजविद्याध्याये 'मन्मना भव' इत्यादिना पूर्व्वमपि ममातिप्रियत्वादन्ते पुनरुच्यमानं शृणु परमं सर्व्वसारस्यापि गीताशास्त्रस्य सारभूतम् । पुनःकथनेन हेतुः-इष्टोऽसीति त्वं ममेष्टः प्रियतमोऽसि। मद्वाक्यं दृढ़मखिल-प्रमाणोपेतमिति निश्चिनोष्यतस्ते हितं वदयामि-तयाप्येतदेवानुष्ठेयमिति भावः ॥६४॥

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥६५॥

सारा०व०—मन्मना भव इति मद्भक्तः सन्नेव मां चिन्तय, न तु ज्ञानी योगी वा भूत्वा मद्ध्यानं कुर्व्वित्यर्थः, यद्वा मन्मना भव मह्यं श्यामसुन्दराय सुस्निग्धाकुञ्चितकुन्तलकाय सुन्दरभ्रूवल्लि-मधुरकृपाकटाक्षामृतवर्षिवदनचन्द्राय स्वीयं देयत्वेन मनो यस्य तथाभूतो भव, अथवा श्रोत्रादीन्द्रियाणि देहीत्याह



--मद्भक्तो भव श्रवणकीर्त्तन--मन्मूर्त्तिदर्शन--मन्मन्दिरमार्ज्जन-लेपन--पुष्पाहरण-मन्मालालङ्कारच्छत्रचामरादिभिः सर्व्वेन्द्रिय-करणकं मद्भजनं कुरु, अथवा मह्यं गन्धपुष्पधूपदीपनैवेद्यादीनि देहीत्याह-मद्‌याजी भव मत्पूजनं कुरु, अथवा मह्यं नमस्कारमात्रं देहीत्याह-मां नमस्कुरु भूमौ निपत्याष्टाङ्गं पञ्चाङ्गं वा प्रणामं कुरु । एषां चतुर्णां मच्चिन्तनसेवनपूजनप्रणामानां समुच्चयमेकतरं वा त्वं कुरु। मामेवैष्यसि प्राप्स्यसि, मनःप्रदानं श्रोत्रादीन्द्रियप्रदानं गन्धपुष्पादिप्रदानं वा त्वं कुरु। तुभ्यमहमात्मानमेव दास्यामीति सत्यं—ते तवैव, नात्र संशयिष्ठा इति भावः,—"सत्यं शपथतथ्ययोः" इत्यमरः। ननु माथुरदेशोद्भूता लोकाः प्रतिवाक्यमेव शपथं कुर्व्वन्ति सत्यम्, तर्हि प्रतिजाने प्रतिज्ञां कृत्वा ब्रवीमि—त्वं मे प्रियोऽसि, न हि प्रियं कोऽपि वञ्चयतीति भावः ॥ ६५ ॥

गी०भू०—एतद्वचः प्राह-मन्मना भवेति। व्याख्यातं प्राक् मन्मनस्त्वादिविशिष्टो मामेव नीलोत्पलश्यामलत्वादिगुणकं त्वदतिप्रियं देवकीनन्दनं कृष्णमेव मनुष्यसंनिवेशिनमेष्यसि, न तु मम रूपान्तरं सहस्रशीर्षत्वादिलक्षणमङ्गुष्ठमात्रमन्तर्य्यामिणं वा नृसिंहवराहादिलक्षणं वेत्यर्थः । तुभ्यमहमात्मानमेव त्वत्सखं दास्यामीति ते तव सत्यं शपथः-"सत्यं शपथतथ्ययोः" इति नानार्थवर्गः। अत्र न संशयीष्ठा इति भावः। ननु माथुरत्वात्तावशपथकरणादपि मे न संशयविनाशस्तत्राह-प्रतिजाने प्रतिज्ञां कृत्वाहमब्रुवम्; यत्त्वं मे प्रियोऽसि स्निग्धमनसा हि माथुराः प्रियं न प्रतारयन्ति, किं पुनः प्रेष्ठमिति भावः । यस्य मय्यतिप्रीतिस्तस्मिन् ममापि तथा । तद्वियोगं सोढुमहं न शक्नोमीति पूर्व्वमेव मयोक्तं-प्रियो हि इत्यादिना; तस्मान्मद्वाचि विश्वसिहि मामेव प्राप्स्यसि ॥६५॥

**सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज।**
**अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥६६॥**

सारा०व०—ननु त्वद्ध्यानादिकं यत् करोमि तत् किं स्वाश्रमधर्म्मानुष्ठानपूर्व्वकं वा केवलं वा? तत्राह—सर्व्वधर्म्मान् वर्णाश्रमधर्म्मान् सर्व्वान् एव परित्यज्य एकं मामेव शरणं व्रज, परित्यज्य संन्यस्येति न व्याख्येयमर्ज्जुनस्य क्षत्रियत्वेन सन्न्यासानधिकारान्न चार्ज्जुनं लक्ष्यीकृत्यान्यजनसमुदायमेवोपदिदेश भगवानिति वाच्यम्। लक्ष्यभूतमर्ज्जुनं प्रत्युपदेशं योजयितुमौचित्ये सत्येवान्यस्याप्युपदेष्टव्यत्वं सम्भवेन्न त्वन्यथा, न च परित्यज्येत्यस्य फलत्याग एव तात्पर्य्यमिति व्याख्येयमस्य वाक्यस्य "देवर्षिभूताप्तनृणां पितॄणां न किङ्करो नायमृणी च राजन्। सर्व्वात्मना यः शरणं शरण्यं गतो मुकुन्दं परिहृत्य कर्त्तम्॥" "मर्त्त्यो यदा त्यक्तसमस्तकर्म्मा निवेदितात्मा विचिकीर्षितो मे। तदामृतत्वं प्रतिपद्यमानो मयात्मभूयाय च कल्पते वै॥" "तावत् कर्म्माणि कुर्व्वीत न निर्व्विद्येत यावता। मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते॥" आज्ञायैवं गुणान् दोषान् मयादिष्टानपि स्वकान्। धर्म्मान् संत्यज्य यः सर्व्वान् मां भजेत् स च सत्तमः॥" इत्यादिभिर्भगवद्वाक्यैः सहैकार्थस्यावश्यव्याख्येयत्वात्। अत्र च परि-शव्द-प्रयोगाच्च। अत एकं मां शरणं व्रज न तु धर्म्मज्ञनयोग देवतान्तरादिकमित्यर्थः। पूर्व्वं हि मदनन्यभक्तौ सर्व्वश्रेष्ठायां तवाधिकारो नास्तीत्यतस्त्वं 'यत् करोषि यदश्नासि' इत्यादि-ग्रन्थेन मया कर्म्ममिश्रायां भक्तौ तवाधिकार उक्तः। सम्प्रति त्वतिकृपया तुभ्यमनन्यभक्तावेवाधिकारस्तस्या अनन्यभक्तेर्यादृच्छिकमदैकान्तिक-भक्तकृपैकलभ्यत्वलक्षणं नियमं स्वकृतमपि भीष्मयुद्धे स्वप्रतिज्ञामिवापनीय दत्ता इति भावः। न च मदाज्ञया नित्य-



नैमित्तिककर्म्मत्यागे तव प्रत्यवाय-शङ्का सम्भवेत्। वेदरूपेण मयैव नित्यकर्म्मानुष्ठानमादिष्टमधुना तु स्वरूपेणैव तत्त्याग आदिश्यत इत्यतः कथं ते नित्यकर्म्माकरणे पापानि सम्भवन्तु? प्रत्युतातःपरं नित्यकर्म्मणि कृत एव पापानि भविष्यन्ति साक्षान्मदाज्ञालङ्घनादित्यवधेयम। ननु यो हि यच्छरणो भवति, स हि मूल्यक्रीतः पशुरिव तदधीनः, स तं यत् कारयति, तदेव करोति, यत्र स्थापयति, तत्रैव तिष्ठति, यद्भोजयति तदेव भुङ्क्ते इति शरणापत्तिलक्षणस्य धर्म्मस्य तत्त्वम्, यदुक्तं वायुपुराणे—"आनुकूल्यस्य सङ्कल्पं प्रातिकूल्यस्य वर्ज्जनम। रक्षिष्यतीति विश्वासो भर्त्तृत्वे ("गोप्तृत्वे" इति पाठो वा) वरणं तथा। निःक्षेपणमकार्पण्यं षड्विधा शरणागतिः॥" इति। भक्तिशास्त्रविहिता स्वाभीष्टदेवाय रोचमाना प्रवृत्तिरानुकूल्यं, तद्विपरीतं प्रातिकूल्यम्, 'भर्त्तृत्वे' (गोप्तृत्वे) इति स एव मम रक्षको नान्य इति यत्, रक्षिष्यतीति स्वरक्षणप्रातिकूल्यवस्तुपूपस्थितेष्वपि स मां रक्षिष्यत्येवेति द्रौपदीगजेन्द्रादीनामिव विश्वासः, निःक्षेपणं स्वीयस्थूलसूक्ष्मदेहसहितस्य एव स्वस्य श्रीकृष्णार्थ एव विनियोगः, अकार्पण्यं नान्यत्र क्वापि स्वदैन्यज्ञापनमिति षण्णां वस्तूनां विधाऽप्यनुष्ठानं यस्यां सा शरणागतिरिति। तदद्यारभ्य यद्यहं त्वां शरणं गत एव वर्त्ते, तर्हि त्वदुक्तं भद्रमभद्रं वा यद्भवेत्तदेव मम कर्त्तव्यम्। तत्र यदि त्वं मां धर्म्ममेव कारयसि, तदा न काचिच्चिन्ता। यदि त्वीश्वरत्वात् स्वैराचारस्त्वं मामधर्म्ममेव कारयसि, तदा का गतिस्तत्राह—अहमिति। प्राचीनार्व्वाचीनानि यावन्ति वर्त्तन्ते, यावन्ति वाहं कारयिष्यामि, तेभ्यः सर्व्वेभ्य एव पापेभ्या मोक्षयिष्यामि—नाहमन्यशरण्य इव तत्रासमर्थ इति भावः। त्वामालम्ब्यैव शास्त्रमिदं लोकमात्रमेवोपदिष्टवानस्मि। मा शुचः—स्वार्थं परार्थं वा शोकं मा कार्षीः—युष्मदादिकः सर्व्व एव लोकः

स्वपरधर्म्मान् सर्व्वान् एव परित्यज्य मच्चिन्तनादिपरो मां शरणमापद्य सुखेनैव वर्त्ततां, तस्य पापमोचनभारः संसारमोचनभारो मत्प्रापणभारो मया प्रतिज्ञायैवाङ्गीकृतः। किं बहुना, देहव्यवहारभारोऽपि मयाङ्गीकृत एव, यदुक्तम्--"अनन्याश्चिन्तयन्तो मां ये जनाः पर्य्युपासते। तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥" इति। हन्त ! एतावान् भारो मया स्वप्रभौ निक्षिप्त इत्यपि शोकं मा कार्षीर्भक्तवत्सलस्य सत्यसङ्कल्पस्य मम न तत्रायासलेशोऽपीति नातः परमधिकमुपदेष्टव्यमस्तीति शास्त्रं समाप्तीकृतम् ॥६६॥

गी०भू०—ननु यजनप्रणत्यादिस्तव शुद्धा भक्तिः प्राक्तनकर्म्मरूपानन्तपापमलिनहृदा पुंसा कथं शक्या कर्त्तुं यावत् त्वद्भक्तिविरोधीनि तान्यनन्तानि पापानि कृच्छ्रादिप्रायश्चित्तैः सविहितैश्च धर्म्मैर्न विनश्येयुरिति चेत्तत्राह—सर्व्वेति। प्राक्तन-पापप्रायश्चित्तभूतान् कृच्छ्रादीन् सविहितांश्च सर्व्वान् धर्म्मान् परित्यज्य स्वरूपतस्त्यक्त्वा मां-सर्व्वेश्वरं कृष्णं नृसिंहदाशरथ्यादिरूपेण बहुधाविर्भूतं विशुद्धभक्तिगोचरं सन्तमविद्यापर्य्यन्तसर्व्वकामाविनाशकमेकं, न तु मत्तोऽन्यं शितिकण्ठादिं, शरणं व्रज प्रपद्यस्व। शरण्यः सर्व्वेश्वरोऽहं सर्व्वैपापेभ्यस्तेभ्यः प्राक्तनकर्म्मभ्यस्त्वां शरणागतं मोक्षयिष्यामीति मिथःकर्त्तव्यता दर्शिता। त्वं मा शुचः-अचिरायुषा मया हृद्विशुद्धिमिच्छतातिचिरसाध्या दुष्कराश्च ते कृच्छ्रादयः कथमनुष्ठेया इति शोकं मा कार्षीरित्यर्थः। अत्र मत्प्रपत्त्यैव निखिलो दोषविनाशात्तदर्थं कृच्छ्रादिप्रयासो मत्प्रपत्तुर्न भवेदित्युक्तम्। श्रुतिश्चैवमाह-"न कर्म्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः" इति। श्रद्धा-भक्तिध्यानयोगादवैतीति चैवमाद्या। सनिष्ठानां हृद्विशुद्धये परिनिष्ठितानां च लोकसंग्रहाय यथायथं कार्य्यास्ते धर्म्माः-"तमेतम्" इत्यादिभ्यः-"सत्येन



लभ्यस्तपसा ह्येष आत्मा" इत्यादिभ्यश्च श्रुतिभ्यः। न च विहितत्यागे प्रत्यवायलक्षणं पापं स्यादिति शोकं मा कुर्व्विति व्याख्येयम्। वेदनिर्देशेनाग्निहोत्रादित्यागे यतेरिव परेशनिर्देशेन तत्त्यागे तत्प्रपत्तुस्तदयोगात्; प्रत्युत तन्निर्देशातिक्रमे दोषापत्तिः स्यात्। न च स्वरूपतो विहितत्यागे प्रत्यवायापत्तेः; सर्व्वाणि धर्म्मफलानीति व्याख्येयम्; फलत्यागे तदनापत्तेः। तस्मात् प्रपन्नस्य स्वरूपतो धर्म्मत्यागः; न च 'न हि कश्चित्' इत्यादिन्यायेन स्वधर्म्मानुष्ठानापत्तिस्तद्द्वयजनार्दानिरतस्य तेन न्यायेन तदनापत्तेः। तथा च सन्निष्ठस्यात्मानुभवान्तःपरिनिष्ठितस्य च परात्मानुभवान्तो यथा धर्म्माचारस्तथा प्रपत्तुः प्रपत्तिः शुद्धान्तः स इति एवमेवोक्तमेकादशेऽपि—"तावत् कर्म्माणि कुर्व्वीत न निर्व्विद्येत यावता। मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते ॥" "ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वानपेक्षकः। सलिङ्गानाश्रमांस्त्यक्त्वा चरेदविधिगोचरः ॥" इति। एषा 'शरणागति'-शब्दिता प्रपत्तिः षड्ङ्गिका-"आनुकूल्यस्य संकल्पः प्रातिकूल्यस्य वर्ज्जनम्। रक्षिष्यतीति विश्वासो गोप्तृत्वे वरणं तथा। आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः ॥" इति वायुपुराणात्। भक्तिशास्त्रविहिता हरये रोचमाना प्रवृत्तिरानुकूल्यम्; तद्विपरीतन्तु प्रातिकूल्यम्; आत्मनिक्षेपः शरण्ये तस्मिन् स्वभरन्यासः; कार्पण्यमनुधर्षः; निक्षेपणमकार्पण्यमिति क्वचित् पाठः-तत्र कार्पण्यं ततोऽन्यस्मिन् स्वदैन्यप्रकाशः। स्फुटमन्यत् ॥६६॥

**इदं ते नातपस्काय नाभक्ताय कदाचन।**
**न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥६७॥**

सारा०व०--एवं गीताशास्त्रमुपदिश्य सम्प्रदायप्रवर्त्तने नियममाह--इदमिति। अतपस्कायासंयतेन्द्रियाय--"मनसश्चेन्द्रि-

याणाञ्च ऐकाग्र्यं परमं तपः" इति स्मृतेः । संयतेन्द्रियत्वे सत्यप्यभक्ताय न वाच्यम्, संयतेन्द्रियत्वेऽपि भक्तत्वेऽपि च सति अशुश्रूषवे न वाच्यम्, संयतेन्द्रियत्वादिधर्म्मत्रयवत्त्वेऽपि यो मामभ्यसूयति, मयि निरुपाधिपूर्णब्रह्मणि मायासावर्ण्यदोषमारोपयति, तस्मै सर्व्वथैव न वाच्यम् ॥६७॥

गी०भू०—अथ स्वोपदिष्टं गीताशास्त्रं पात्रेभ्य एव न त्वपात्रेभ्यो देयमिति उपदिशति–इदमिति । इदं शास्त्रं ते त्वयातपस्काय अजितेन्द्रियाय न वाच्यम्; तपस्विनेऽप्यभक्ताय शास्त्रोपदेष्टरि त्वयि शास्त्रप्रतिपाद्ये मयि च सर्व्वेशभक्तिशून्याय न वाच्यम्; तपस्विनेऽपि भक्तायाप्यशुश्रूषवे श्रोतुमनिच्छवे न वाच्यम् । यो मां सर्व्वेश्वरं नित्यगुणविग्रहमसूयति मयि मायिकगुणविग्रहतामारोपयति, तस्मै तु नैववाच्यमित्यतो भिन्नया विभक्त्या तस्य निर्द्देशः । एवमाह सूत्रकारः – "अनाविष्कुर्व्वन्नन्वयात्"—इति ॥६७॥

य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥६८॥

सारा०व०—एतदुपदेष्टुः फलमाह—य इति द्वाभ्याम् । परां भक्तिं कृत्वेति प्रथमं परमभक्तिप्राप्तिः, ततो मत्प्राप्तिः, एतदुपदेष्टुर्भवति ॥ ६८ ॥

गी०भू०—शास्त्रोपदेष्टुः फलमाह–य इति । एतदुपदेष्टुरादौ मत्परभक्ति-लाभस्ततो मत्पदलाभो भवति ॥६८॥

न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।
भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥६९॥

सारा०व०—तस्मादुपदेष्टुः सकाशात् अन्योऽतिप्रियङ्करः अतिप्रियश्च नास्ति ॥ ६९ ॥



गी०भू०—न चेति – तस्माद्गीतोपदेष्टुः सकाशादन्यो मनुष्येषु मध्ये मम प्रियकृत्तमः परितोषकर्त्ता पूर्व्वं नाभून्न च भविष्यति—मम तस्मादन्यः प्रियतरो भुवि नाभून्न च भविष्यति ॥६९॥

अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥७०॥

सारा०व०—एतदध्ययनफलमाह—अध्येष्यत इति ॥ ७० ॥

गी०भू०—अथ शास्त्राध्येतुः फलमाह—अध्येष्यते चेति । अत्र यो ज्ञानयज्ञो वर्णितस्तेनाहमेतत्पाठमात्रेणैवेष्टोऽभ्यर्चितः स्यामिति मे मतिस्तस्याहं सुलभ इत्यर्थः ॥७०॥

श्रद्धावाननसूयश्च शृणुयादपि यो नरः ।
सोऽपि मुक्तः शुभाँल्लोकान्प्राप्नुयात्पुण्यकर्मणाम् ॥७१॥

सारा०व०—एतच्छ्रवणफलमाह—श्रद्धावानिति ॥ ७१ ॥

गी०भू०—श्रोतुः फलमाह—श्रद्धेति । यः केवलं श्रद्धया शृणोति, अनसूयः किमर्थं उच्चैरशुद्धं वा पठतीति दोषदृष्टिमकुर्व्वन् सोऽपि निखिलैः पापैर्मुक्तः पुण्यकर्म्मणामश्वमेधादियाजिनां लोकान् प्राप्नुयात्; यद्वा पुण्यकर्म्मणां भक्तिमतां लोकान् ध्रुवलोकादीन् वैकुण्ठभेदानित्यर्थः ॥७१॥

कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा ।
कच्चिदज्ञानसंमोहः प्रनष्टस्ते धनञ्जय ॥७२॥

सारा०व०—सम्यग्बोधानुपपत्तौ पुनरुपदेक्ष्यामीत्याशयेनाह—कच्चिदिति ॥ ७२ ॥

गी०भू०—एवं शास्त्रं तद्वाचनादिमाहात्म्यञ्चोक्तम् । अथ शास्त्रार्थावधानतदनुभवौ पृच्छति—कच्चिदिति प्रश्नार्थेऽव्ययम् । सम्यगनुभवानुदये पुनरप्येतदुपदेक्ष्यामीति भावः ॥७२॥

अर्जुन उवाच –

**नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत ।**
**स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव ॥७३॥**

सारा०ब०—किमतःपरं पृच्छाम्यहन्तु सर्व्वधर्म्मान् परित्यज्य त्वां शरणं गतो निश्चिन्त एव त्वयि बिश्रम्भबानस्मीत्याह—नष्ट इति । करिष्य इत्यतःपरं शरण्यस्य तवाज्ञायां स्थितिरेव शरणापन्नस्य मम धर्म्मो, न तु स्वाश्रमधर्म्मो, नापि ज्ञानयोगादयः, ते त्वद्यारभ्य त्यक्ता एव, ततश्च भोः प्रियसख अर्ज्जुन ! मम भूभारहरणे किञ्चिदवशिष्टं कृत्यमस्ति, तत्तु त्वद्द्वारैव चिकीर्षामीति भगवतोक्ते सति गाण्डीवपाणिरर्ज्जुनो योद्धुमुदतिष्ठदिति ॥७३॥

गी०भू०—एवं पृष्टः पार्थः शास्त्रानुभवं फलद्वारेणाह—नष्ट इति । मोहो बिपरीतज्ञानलक्षणः मम नष्टस्त्वत्प्रसादादेव स्मृतिश्च यथावस्थितवस्तुनिष्ठया मया लब्धा ; अहं गतसन्देहश्छिन्नसंशयः स्थितोऽधुनास्मि ; तव बचनं करिष्ये । एतदुक्तं भबति—देबमानबादयो निखिलाः प्राणिनः सर्व्वे स्वस्वकर्म्मसु स्वतन्त्रा देहाभिमानिनो मानवैरर्च्चिता देबास्तेभ्योऽभीष्टप्रदाः । यस्त्वीश्वरः कोऽप्यस्ति, स हि निर्गुणो निराकृतिरुदासीनस्तत्सं-निधानात् प्रकृतिर्जगद्धेतुरित्येवं बिपरीतज्ञानलक्षणो यो मोहः पूर्व्वं ममाभूत्, स त्वदुपलब्धादुपदेशाद्विनष्टः । पराख्यस्वरूपशक्तिमान् बिज्ञानानन्दमूर्त्तिः सार्व्वज्ञ्यसार्व्वैश्वर्य्य-सत्यसंकल्पादिगुणरत्नाकरो भक्तसुहृत् सर्व्वेश्वरः प्रकृति-जीवकालाख्य-शक्तिभिः संकल्पमात्रेण जीवकर्म्मानुगुणो बिचित्रसर्गकृत् स्वभक्तेभ्यः स्वपर्य्यन्तसर्व्वप्रदोऽकिञ्चनभक्तबित्तः । स च त्वमेव मत्सखो बसुदेवसूनुरिति तात्त्विकं ज्ञानं ममाभूत् ; अतःपरं



त्वामहं प्रपन्नः स्थितोऽस्मि ; त्वं मां कदाचिदपि न त्यक्ष्यसीति सन्देहश्च मे छिन्नः । अथ भूभारहरणं स्वप्रयोजनं चेत् प्रपन्नेन मया चिकीर्षितं तर्हि तद्वचनं तव करिष्यामीत्यर्ज्जुनो धनुःपाणिरुदतिष्ठदिति ॥७३॥

संजय उवाच–

**इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।**
**संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥७४॥**

गी०भू०—समाप्तः शास्त्रार्थः । अथ कथासम्बन्धमनुसन्दधानः सञ्जयो धृतराष्ट्रमुवाच—इत्यहमिति । अद्भुतं चेतसो बिस्मयकरं लोकेष्वसंभाव्यमानत्वात्, रोमहर्षणं देहे पुलकजनकम् ॥७४॥

सारा०ब०—अतःपरं पञ्चश्लोकव्याख्या सर्व्वगीतार्थतात्पर्य्यनिष्कर्षेऽन्तिमश्लोकाः यत्र बर्त्तन्ते, तां पत्रद्वयीं विनायकः स्वबाहनेनाखुनापहृतबानित्यतः पुनर्नालिखम् । तां तन्मात्रबादाम् । स प्रसीदतु, तस्मै नमः । इति श्रीमद्भगवद्गीताटीका 'सारार्थवर्षिणी' समाप्तीभूता सतां प्रीतये स्तादिति

सारार्थबर्षिणी बिश्वजनीना भक्तचातकान् ।
माधुरी धिनुतादस्या माधुरी भातु मे हृदि ॥ (२)
इति सारार्थवर्षिण्यां हर्षिण्यां भक्तचेतसाम् ।
गीतास्वष्टादशोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ (३)

**इति श्रील--विश्वनाथ–चक्रवर्त्ति-ठक्कुर--कृता**
**'सारार्थवर्षिणी' टीका समाप्ता ।**



व्यासप्रसादाच्छ्रुतवानेतद्गुह्यमहं परम् ।
योगं योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयम् ॥७५॥

गी०भू०—व्यवहिततत्संवादश्रवणे स्वयोग्यतामाह—व्यासेति । व्यासप्रसादात्तद्दत्तादिव्यचक्षुःश्रोत्रादिलाभरूपादेतद्गुह्यं श्रुतवान् । किमेतदित्याह—परं योगमिति । कर्म्मयोगं ज्ञानयोगं भक्तियोगं चेत्यर्थः । परत्वं सम्पादयति—योगेश्वरादिति । देवमानवादि-निखिलप्राणिनां स्वभावसम्बन्धो योगः; तेषामीश्वरान्नियन्तुः स्वयंरूपात् कृष्णात् स्वमुखेनैव, न तु परम्परया कथयतः । श्रुतवानस्मीति स्वभाग्यं श्लाघ्यते ॥७५॥

राजन्संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥७६॥

तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ।
विस्मयो मे महान्राजन्हृष्यामि च पुनः पुनः ॥७७॥

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥७८॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्व्वणि श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्ज्जुनसंवादे मोक्षयोगो नामाष्टादशोऽध्यायः ।

गी०भू०—राजन् धृतराष्ट्र ! पुण्यं श्रोतुरविद्यापर्य्यन्तसर्व्वदोषहरम्, मुहुर्मुहुः प्रतिक्षणं हृष्यामि—रोमाञ्चितोऽस्मि ॥७६॥

गी०भू०—तच्च बिश्वरूपं यदर्ज्जुनायोपदर्शितम ॥७७॥

गी०भू०—एवञ्च सति स्वपुत्रबिजयादिस्पृहां परित्यजेत्याह—यत्रेति । यत्र योगेश्वरः पूर्व्वं व्याख्यातः स्वसंकल्पायत्त-स्वेतरसर्व्वप्राणिस्वरूपस्थितिप्रवृत्तिकः कृष्णो बसुदेबसूनुः सारथ्यपर्य्यन्त-साहाय्यकारितया बर्त्तते, यत्र पार्थस्त्वत्पितृस्वसृपुत्रो नराबतारः कृष्णैकान्ती धनुर्द्धरोऽच्छेद्यगाण्डीवपाणिर्वर्त्तते । तत्रैव श्रीकृष्णार्ज्जुनाधिष्ठिते, युधिष्ठिरपक्षे श्रीराजलक्ष्मीः, बिजयः शत्रुपरिभबहेतुकः परमोत्कर्षः, भूतिरुत्तरोत्तरा राजलक्ष्मीबिवृद्धिः, नीतिर्न्यायप्रवृत्तिर्ध्रुवा स्थिरेति सर्व्वत्र सम्बध्यते । यत्तु युद्धपरमेतच्छास्त्रमिति शङ्क्यते ? तत्र—'मन्मना भव मद्भक्तः' इत्यादेः, 'सर्व्वधर्म्मान् परित्यज्य' इत्यादेश्चोपदेशास्तस्माच्चतुर्णां बर्णानामाश्रमाणाञ्च धर्म्मा हृद्बिशुद्धिहेतुतया लोकसंग्रहार्थतया चेह निरूपिता इत्येव सुष्ठु ॥७८॥



उपाया बहबस्तेषु प्रपत्तिर्दास्यपूर्व्विका ।
क्षिप्रं प्रसादनी बिष्णोरित्यष्टादशतो मतम् ॥
पीतं येन यशोदास्तन्यं नीतं पार्थसारथ्यम् ।
स्फीतं सद्गुणवृन्दैस्तदत्र गीतं परं तत्त्वम् ॥१॥

यदिच्छातरिं प्राप्य गीतापयोधौ न्यमज्जं गृहीतातिचित्रार्थरत्नम् ।
न चोत्थातुमस्मि प्रभुर्हर्षयोगात् स मे कौतुकी नन्दसूनुः प्रियस्तात् ॥२
श्रीमद्गीताभूषणं नाम भाष्यं यत्नाद्विद्याभूषणेनोपचीर्णम् ।
श्रीगोबिन्दप्रेममाधुर्य्यलुब्धाः कारुण्यार्द्राः साधवः शोधयध्वम् ॥३॥

इति श्रीमद्भगवद्गीतोपनिषद्भाष्येऽष्टादशोऽध्यायः ।









## ❀ गीता–माहात्म्यम् ❀



गीताशास्त्रमिदं पुण्यं यः पठेत् प्रयतः पुमान् ।
विष्णोः पदमवाप्नोति भयशोकादिवर्ज्जितः ॥१॥
गीताध्ययनशीलस्य प्राणायामपरस्य च ।
नैव सन्ति हि पापानि पूर्व्वजन्मकृतानि च ॥२॥
मलनिर्म्मोचनं पुंसां जलस्नानं दिने दिने ।
सकृद्गीताम्भसि स्नानं संसारमलनाशनम् ॥३॥
गीता सुगीता कर्त्तव्या किमन्यैः शास्त्रविस्तरैः ।
या स्वयं पद्मनाभस्य मुखपद्माद्विनिःसृता ॥४॥
भारतामृत-सर्व्वस्वं विष्णोर्वक्त्राद्विनिःसृतम् ।
गीता-गङ्गोदकं पीत्वा पुनर्जन्म न विद्यते ॥५॥
सर्व्वोपनिषदो गावो दोग्धा गोपालनन्दनः ।
पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत् ॥६॥
एकं शास्त्रं देवकीपुत्रगीतमेको देवो देवकीपुत्र एव ।
एको मन्त्रस्तस्य नामानि यानि कर्म्माप्येकं तस्य देवस्य सेवा ॥



## श्रीश्रीस्वयम्भगवत्त्वाष्टकम् ।



स्वजन्मन्यैश्वर्य्यं बलमिह बधे दैत्य-वितते-
र्यशः पार्थ-त्राणे यदुपुरि महासम्पदमधात् ।
परं ज्ञानं जिष्णौ मुषलमनु वैराग्यमनु यो
भगैः षड्भिः पूर्णः स भवतु मुदे नन्दतनयः ॥१॥
चतुर्ब्बाहुत्वं यः स्वजनि समये यो मृदशने
जगत्कोटीं कुक्ष्यन्तर-परिमितत्वं स्ववपुषः ।
दधि—स्फोटे ब्रह्मण्यतनुत परानन्त—तनुतां
महैश्वर्य्यैः पूर्णः स भवतु मुदे नन्दतनयः ॥२॥
बलं बक्यां दन्तच्छदन-वरयोः केशिनि नृगे
नृपे बाह्वोरङ्घ्रेः फणिनि वपुषः कंस-मरुतोः ।
गिरित्रे दैत्येष्वप्यतनुत निजास्त्रस्य यदतो
महौजोभिः पूर्णः स भवतु मुदे नन्दतनयः ॥३॥
असंख्याता गोप्यो व्रजभुवि महिष्यो यदुपुरे
सुताः प्रद्युम्नाद्याः सुरतरु-सुधर्म्मादि च धनम् ।
बहिर्द्वारि ब्रह्माद्यपि बलिवहं स्तौति यदतः
श्रियां पूरैः पूर्णः स भवतु मुदे नन्दतनयः ॥४॥
यतो दत्ते मुक्तिं रिपु-विततये यन्नरजनि-
र्विजेता रुद्रादेरपि नत-जनाधीन इति यत् ।

सभायां द्रौपद्या वरकृदतिपूज्यो नृपमखे
यशोभिस्तत् पूर्णः स भवतु मुदे नन्दतनयः ॥५॥
न्यधाद्गीतारत्नं त्रिजगदतुलं यत् प्रियसखे
परं तत्त्वं प्रेम्नोद्धव-परमभक्ते च निगमम् ।
निज-प्राण-प्रेष्ठास्वपि रसभृतं गोपकुलजा-
स्वतो ज्ञानैः पूर्णः स भवतु मुदे नन्दतनयः ॥६॥
कृतागस्कं व्याधं सतनुमपि वैकुण्ठमनय-
न्ममत्वस्यैकाग्रानपि परिजनान् हन्त ! विजहौ ।
यद्यप्येते श्रुत्या ध्रुवतनुतयोक्तास्तदपि हा
स्ववैराग्यैः पूर्णः स भवतु मुदे नन्दतनयः ॥७॥
अजत्वं जन्मित्वं रतिररतितेहारहितता
सलीलत्वं व्याप्तिः परिमितिरहन्ता-ममतयोः ।
पदे त्यागात्यागावुभयमपि नित्यं सदुररी-
करोतीशः पूर्णः स भवतु मुदे नन्दतनयः ॥८॥
समुद्यत्—सन्देह—ज्वरशत—हरं भेषजवरं
जनो यः सेवेत प्रथित-भगवत्त्वाष्टकमिदम् ।
तदैश्वर्य्य-स्वादैः स्वधियमतिवेलं सरसयन्
लभेतासौ तस्य प्रिय-परिजनानुग्य-पदवीम् ॥९॥
इति श्रीमद्विश्वनाथ-चक्रवर्त्ति-ठक्कुर-विरचित-स्तवामृतलहर्य्यां
श्रीश्रीस्वयम्भगवत्त्वाष्टकं सम्पूर्णम् ॥

